॥ ८ ॥ प्रकृत्या प्राक्कृतं प्राज्ञै–र्दुर्व्याख्येयं यथास्थितं । अतः संस्कृत्य पूर्वार्थान् श्रोतॄणां कथयाम्यहं ॥ ९ ॥

इत्थं कृतनमस्कारो भव्यानां बोधहेतवे । धर्मरत्नत्रयाख्यान–मयं शास्त्रं तनोम्यहं ॥ १० ॥ धर्मो मंगलमुत्कृष्टं धर्मः सर्वसमृद्धिदः । धर्मः शर्मकरो नित्यं धर्मः कर्ममलापहः ॥ ११ ॥ संतानतारको धर्मो धर्मः पूर्वजपावनः । अपकीर्तिहरो धर्मो धर्मः कीर्त्तिविवर्धनः ॥ १२ ॥ तक्रादिव नवनीतं कमलं कर्दमादिव । इव मुक्तामणिर्वंशा–त्सारं धर्मो नृजन्मनः ॥ १३ ॥ वेदवाक्येषु सर्वेषु प्रणवः प्रथमो यथा । पुरुषार्थेषु सर्वेषु तथा धर्मो निगद्यते ॥ १४ ॥ दुर्गतिप्रपतत्प्राणि–धारणाद्धर्म उच्यते । ज्ञानदर्शनचारित्र–रत्नत्रयमयः स तु ॥ १५ ॥ जीवाजीवादितत्त्वाना–मवबोधो यतो भवेत् । तदत्र कथ्यते सम्यग् ज्ञानरत्नं विवेकिभिः ॥ १६ ॥ तृतीयं लोचनं ज्ञान–मदृष्टार्थप्रकाशनं । द्वितीयं च रवेर्विंबं दृष्टेतरतमोऽपहं ॥ १७ ॥ ज्ञानं निष्कारणो बंधु–र्ज्ञानं यानं भवांबुधौ । ज्ञानं प्रस्खलतां दृष्टि–र्ज्ञानं दीपस्तमोभरे ॥ १८ ॥ ज्ञानादुध्धियते जंतुः पतितोऽपि महापदि । एकश्लोकार्थबोधेन यथा मलयसुंदरी ॥१९॥ तथाहि–द्वीपेषु मध्यमो जंबू–द्वीपोऽस्तीह महीतले । राकेंदुरिव यो वृत्तो लवणोदधिनावृतः ॥ २० ॥ लक्षयोजनमानस्य लक्षणं तस्य वेत्ति कः । ससवर्षोऽपि षड्वर्ष–धरो यः कथितो बुधैः ॥ २१ ॥ तस्यांतर्भरतं क्षेत्रं ख्यातमक्षीणसं-

पदा । पट्खंडमप्यखंडं यत् साध्यते चक्रवर्त्तिना ॥ २२ ॥

अस्तीह भरतक्षेत्रे नाम्ना चंद्रावती पुरी । अन्यायो हन्यते यस्यां न्याय एव विजृंभते ॥ २३ ॥ भू-रीश्वरगृहा भाति प्रभूतधनदाश्रिता । याष्टापदांकरलोका अपूर्वैवालकापुरी ॥ २४ ॥ भद्रशालावृता भास्व-च्छोभायुक्ताढ्यनंदना । मेरुवद्या सुवर्णश्रीः शोभते विबुधाश्रिता ॥ २५ ॥ यस्यां स्फटिकहर्म्याणि भित्ति-स्वच्छतयाभितः । गुप्तभावान् विवृण्वंति मित्राणीव परस्परं ॥ २६ ॥ नक्षत्रदर्शनाद्रात्रि-र्यस्यां पुर्यनुमीयते । ध्वांते मणिगृहैर्ध्वस्ते दिनं चार्कविलोकनात् ॥ २७ ॥ श्रीवीरधवलस्तत्र मित्रतुल्योऽभवन्नृपः । सच्च-क्राह्लादको नित्यं दीप्यमानकरः पुनः ॥ २८ ॥ यस्य चापे नमत्कोटौ प्रणेमू रिपुमौलयः । त्यक्तजीवैः पु-नर्बाणै-र्निर्जीवा द्वेषिणोऽभवन् ॥ २९ ॥ कोकिलेव प्रियालापा नंदतींदुकलेव या । गंगेव स्वच्छहृदया क-मलेव जनप्रिया ॥ ३० ॥ रतिरूपाधिकरूपा शीलालंकारधारिणी । प्रिया चंपकमालास्य । सा सर्वांतःपु-रीवरा ॥ ३१ ॥ द्वितीयापि प्रिया तस्य नाम्ना कनकवत्यभूत् । सौभाग्यभारादिवैषो-न्नतांगी कुचभारतः ॥ ३२ ॥ ताभ्यामिव रतिप्रीति-भ्यामभ्यासमुपेयुषः । कामस्येव ययौ कालो । भूपालस्य सुखैः कियान् ॥३३॥

अथान्यदा नृपं दृष्ट्वा विच्छायं चिंतया मुखे । संभ्रांतयाशु पप्रच्छे देव्या चंपकमालया ॥ ३४ ॥

राजा जगाद सोद्वेगं चिंताहेतुं प्रिये शृणु । अत्रैवास्मत्पुरे द्वौ स्तो बांधवौ श्रेष्ठिपुंगवौ ॥ ३५ ॥ अन्योऽन्यं स्नेहलौ लोभा–नंदिलोभाकराभिधौ । कुर्वाणौ हट्टवाणिज्यं तौ दिनानि व्यतीयतुः ॥३६॥ गुणवर्माभिधो लोभा—करस्यास्ति सुतो गुणी । लोभानंदी पुनर्व्यूढ–भूरिभार्योऽप्यनंदनः ॥ ३७ ॥ अथान्यदा तयोर्हट्टा–सीनयोरागतः पुमान् । एको भद्राकृतिस्तत्र भ्रमन्नदृष्टपूर्वकः ॥ ३८ ॥ आकारादिगुणैर्ज्ञात्वा तस्य सश्रीकतां तदा । ताभ्यामासनदानादि—प्रतिपत्तिर्विनिर्ममे ॥ ३९ ॥ तत्रैव तिष्ठता तेन विश्वस्तेनैकदा तयोः । अभाणि तुंबमेतन्मे रक्षतं कतिवासरान् ॥ ४० ॥ ताभ्यामादाय हट्टांत— स्तंभ्यामोचि तुंबकं । गोलं गोलं निपेतुश्च ततोऽस्माद्रसबिंदवः ॥ ४१ ॥ अधःस्था आयसी तैस्तु दृष्टा हैमीकृता कुशी । लोभांधाभ्यामगोप्याभ्यां तत्तुंबं रससंयुतं ॥ ४२ ॥

कतिचिद्दिनपर्यंते याचमाने तु तन्नरे । तौ द्वौ मायाविनौ मृद्व्या श्रेष्ठिनावूचतुर्गिरा ॥ ४३ ॥ मूषकैर्जग्धचंधं ते पतित्वाभाजि तुंबकं । खंडान्येवात्र दृष्टान्या–वाभ्यां सत्पुरुषाग्रणि ॥ ४४ ॥ तुंबांतरस्य खंडानि दर्शितान्युपलक्ष्य सः । दक्षोऽज्ञासीदिमान्यन्य—तुंबस्य शकलानि वै ॥ ४५ ॥ ज्ञात्वा तुंबे रसं लोभं गतावेतौ मृषोत्तरैः । संगोप्य तुंबकं मां हि विप्रतारयतोऽधुना ॥ ४६ ॥ तत्कथयामि राजश्रे—

द्रसं गृह्णाति सोऽप्यमुं । वैदेशिकस्य मे हाहा द्विधाप्येषोऽद्य वै गतः ॥ ४७ ॥ ध्यात्वेति श्रेष्ठिना तेन तावूचाते उभावपि । भो ममार्पयतं तुंबं माकार्पा कपटोत्तरं ॥ ४८ ॥ युवयोर्युज्यते नेदृक् कर्तुं न्यायवर्तोर्यतः । अन्यथा भवितानर्थो महान् लोभवशात्मनोः ॥ ४९ ॥ ब्रुवाणावुत्तरं तौ तु तदैव कुपितो नरः । स्तंभयित्वा तथा सोऽगा—द्यथालं चलितुं न तौ ॥ ५० ॥ तथा चलयतो नांगं विस्फुटत्संधिबंधनं । जल्पंताविति तौ दीनौ पात पात म्रियावहे ॥ ५१ ॥ ग्रामांतरादितश्चागा—ल्लोभाकरसुतोऽखिलां । वार्त्तां कुटुंबाद्ज्ञासी—त्तथावस्थौ विलकितौ ॥ ५२ ॥ मंत्रवादादिके तेन सविशेषेऽथ कारिते । विशेषाद्ववृधे पीडा निराशास्तेऽभवंस्ततः ॥ ५३ ॥ उत्तिष्ठते यतो वह्निस्तत एवोपशाम्यति । अतस्तमेव पुरुष—मानयामि कुतोऽप्यहं ॥ ५४ ॥ ध्यात्वेति गुणावर्मा तं नरं द्रष्टुमथाचलत् । सहायमेकमादाय तत्पुरुषोपलक्षकं ॥ ५५ ॥ मंदीभूतं सहायं त—मपि मुक्त्वा क्वचित्पुरे । एक एव स बभ्राम पितुर्दुःखेन दुःखितः ॥ ५६ ॥

अथैकं नगरं दृष्ट्वा धनाढ्यापणमंदिरं । निर्मानुषं रम्यतमं विस्मितः प्रविवेश सः ॥ ५७ ॥ ददर्शैकं नरं तत्र प्रदेशे सुंदरं क्वचित् । पप्रच्छे च स तेनैवं कुतस्त्वं वीरकुंजर ॥ ५८ ॥ अभाणि श्रेष्ठिपुत्रेण पांथः खिन्न इहाविशं । कोऽसि त्वं किमिहैकाकी शून्या ऋद्धापि का पुरी ॥ ५९ ॥ नरेणाभाणि भो भद्र

शृणु त्वं वृत्तमात्मनः । श्रियेदं स्वःपुरस्पर्द्धि नगरं कुशवर्द्धनं ॥ ६० ॥ अत्रासीद्भूपतिः शूरः सूरनामा गुणाग्रणीः । जयविजयचंद्राख्यौ तस्यावां तनयावुभौ ॥६१॥ जयचंद्रो मम भ्राता ज्येष्ठो राज्य उपाविशत् । पितर्युपरतेऽहं त्व–हंकारान्निरगां पुरात् ॥६२॥ सर्वत्राहं भ्रमन् पुर्यां चंद्रावत्यां गतोऽन्यदा । तदुद्याने मया दृष्टो विद्यासिद्धो नरो वरः ॥ ६३ ॥ किंत्वतीसाररोगेण स तथा व्यथितो भृशं । यथा न चलितुं नैव वक्तुं शक्तो मनागपि ॥६४ ॥ ततः करुणया सेव प्रत्यकारि मया तथा । यथाल्पैर्वासरैर्जज्ञे सुखेन पटुविग्रहः ॥ ६५ ॥ तत्पृष्टेन मयाख्याते नामस्थानादिके निजे । विद्ये तेन वितीर्णे द्वे प्रसन्नमनसा मम ॥ ६६ ॥

स्तंभकर्त्री वश्यकर्त्री पाठसिद्धे उभे अपि । रसतुंबं तथा चैकं दत्वाहं तेन जल्पितः ॥ ६७ ॥ दुःखेनैष मयाग्राहि स्वसिद्धो दुर्लभो रसः । अस्यांशस्पर्शमात्रेण लोहं भवति कांचनं ॥ ६८ ॥ रक्षितव्यः प्रयत्नेन ततोऽयं सर्वदा त्वया । ययौ श्रीपर्वते सिद्धो दत्वा शिक्षां ममेति सः ॥ ६९ ॥ परिभ्रमन् प्रविष्टोऽहं चंद्रावत्यां पुनः पुरि । लोभाकरालोभनंदि—श्रेष्ठिनोरापणे गतः ॥ ७० ॥ दक्षाभ्यां प्रतिपत्त्याहं ताभ्यामावर्जितस्तथा । विश्वस्तेन यथा तत्र । तत्तुंबं न्यासितं मया ॥ ७१ ॥ स्थित्वा क्षिप्रः पुरीलक्ष्म्या तत्राहं कतिवासरान् । मातुरुत्कंठितः स्वीय—पुरंप्रत्युत्सुकोऽभवं ॥ ७२ ॥ कथंचिद्विज्ञातरसौ मया मार्गि-

ततुंवकौ । श्रेष्टिनौ तौ स्फुरल्लोभौ ददतुः कूटमुत्तरान् ॥ ७३ ॥ मृषोत्तराविति कृत्वा प्रतीकारं तयोरहं । आगतोऽत्र पुरं शून्यं सर्वमैक्षिष्ट पैतृकं ॥ ७४ ॥ श्रेष्टिसूश्चिंतयामास स एवैष पुमान्ननु । पितरौ येन मे दु खा–वस्थौ तौ विहितौ तदा ॥ ७५ ॥ तावन्नाविष्करोमि स्वं यावत्सम्यगवैमि न । गुणवर्मेति ध्यात्वोचे आयुष्मन्नग्रतो वद ॥ ७६ ॥ ऊचे विजयचंद्रोऽथ यावद्दुःखाकुलो भ्रमन् । सविस्मयश्च नापि स्वं पश्यन्मानुपमात्रकं ॥ ७७ ॥ गतो राजकुलस्य—मारुढो राजमंदिरे । भ्रातृजायां विजयाख्या–मपश्यं तावदेकिकां ॥ ७८ ॥ युग्मं ॥ वृत्तांतं सा मया पृष्टा पतदश्रुविलोचना । मधुरालापं पीठादिदानपूर्वमभापत ॥ ७९ ॥

पुरस्य वहिरुद्याने । मासं मासमुपोषितः । एको रक्तांवरो भिक्षु—रत्रासीज्जनरागभाक् ॥ ८० ॥ भवद्भ्रात्रा नरेंद्रेण कारितः पारणं स तु । नृपाज्ञया मयाक्षेपि जपतोऽस्य समीरणः ॥ ८१ ॥ तस्य पाखंडिनश्चित्तं सुरूपायां मयि स्थितं । ततो गोधाप्रयोगेण निशि सौधं स एयिवान् ॥ ८२ ॥ कामार्थं प्रार्थयमानो वाक्यैर्मां सामदंडजैः ॥ वोध्यमानोऽपि पापः स कथंचिद्विरराम न ॥ ८३ ॥ इतश्च राजा संप्राप्तो द्वारदेशे निशम्य तत् । क्रुद्धस्तं वंधयामास सापराधं तपस्विनं ॥ ८४ ॥ हस्यमानो जनैः प्रात–

निंद्यमानश्च भूभुजा । भ्रामयित्वा पुरीमध्ये चौरमारं स मारितः ॥ ८५ ॥ उत्पन्नो राक्षसो दुष्टः परिणा-
मवशेन सः । स्मृत्वापमानतां स्वीयां गुरुवैरमुवाह च ॥ ८६ ॥ अत्रागत्य ततस्तेन निवेद्य स्वं च वैरिणं
। हतस्ते बांधवो राजा भक्तिं कुर्वन्नपि क्षणात् ॥ ८७ ॥ जीवग्राहं ततो नष्टा हन्यमाना भयात्प्रजाः ।
ऋद्ध्याप्यलंकृतं शून्यं तेनेदं नगरं तव ॥ ८८ ॥ अहं तु तेन नश्यंती धृत्वेत्यूचेऽनुरागिणा । यदि या-
स्यसि भद्रे त्वं त्वामानेष्याम्यहं पुनः ॥ ८९ ॥ अतस्त्वया न गंतव्यं कर्त्तव्यं न भयं तथा । स्थितायाः
अत्र सर्वापि तव चिंता पुनर्मम ॥९०॥ इति स्थिते दिवा क्वापि राक्षसो याति सोऽनिशं । निश्यायाति
पुनर्याति ममैवं वासरा इह ॥ ९१ ॥

अथोचे सा मया तस्य । मर्म किंचित्प्रकाशय । जित्वैनं येन वैरं स्वं राज्यं च वालयाम्यहं ॥९२॥
सोवाचास्य शयानस्य पादयुग्मं घृतेन चेत् । म्रक्ष्यते स्यान्महानिद्रावशोऽचेतनवत्तदा ॥ ९३ ॥ परं पुंसः
करेणैव पादाभ्यंगेऽस्य तादृशी । निद्राऽयाति न नारीणां करस्पर्शेन कर्हिचित् ॥ ९४ ॥ अन्यच्च चरणा-
भ्यंगा—त्पूर्वं चेद्वेत्ति मानुषं । पादाभ्यंगोऽपि नाऽदत्ते सुखं हंत्येव तं तदा ॥ ९५ ॥ इति भ्रातृप्रिया-
ख्यात–दैत्यवृत्तांतमात्मनः । श्रुत्वा यावत्सहायाय कस्मैचिच्चलितोऽस्म्यहं ॥ ९६ ॥ तावत्त्वमपि मेऽत्रैव

मिलितोऽसि नरोत्तम। साहाय्यं कुरु येन स्यु—स्त्वादृशोऽन्योपकारिणः ॥ ९७ ॥ परकार्योद्यताः संतः स्वकार्ये स्युः पराङ्मुखाः। धवलीकुरुते विश्वं कलंकं नात्मनः शशी ॥ ९८ ॥ तावन्मात्रं सुखं न स्या—द्यावन्मात्रं सतोऽसुखं। अनुशोचयतस्तं तं यं यं पश्यति दुःखिनं ॥ ९९ ॥ निष्पेषः पिंजनं तर्कु—कर्त्तनं कूर्चताडनं। कर्पासेनासुखं सोढं पश्यान्याच्छादनाय भोः ॥ १०० ॥ तरवस्तरणेस्तापं सूर्योऽभ्रोछंघनक्रमं। नोः संक्षोभं च पाथोधेः। सोढा कूर्मः क्षितेर्भरं ॥ १ ॥ वारिदो वर्षणक्लेशं क्षितिर्विश्वासुमत्क्रमं। उपकारादृतेऽमीषां न फलं किंचिदीक्ष्यते ॥ २ ॥ युग्मं ॥

नैव नद्यः पिबंत्यंभो वृक्षाः खादंति नो फलं। मेघाः शस्यं च नाश्नंति क्रमोऽमीषां परार्थकृत् ॥३॥ तत्तवैव प्रभावेण भवितेदं पुरं पुनः॥ प्रजाशर्मप्रदं राज्य—लाभो मे ते यशोभरः ॥ ४ ॥ वणिग् दध्यावतः पुंसो ममोपकृतिभारितात्। कार्यं सेत्स्यति तत्कार्यं कार्यं दुष्करमप्यदः ॥ ५ ॥ ध्यात्वेति गुणवर्मा स प्रतिपेदेऽखिलं हि तत्। विजयः स्माह कर्त्तव्यं रक्षोंह्रिम्रक्षणं त्वया ॥ ६ ॥ स्तंभित्वाहं करिष्यामि वश्यं चांतर्मुहूर्त्ततः ॥ कृतसहस्रजापेना—मुं मंत्रेणाशु राक्षसं ॥ ७ ॥ मंत्रयित्वेति सामग्रीं मेलयित्वाखिलामपि। ततस्तौ द्वावपि छन्नौ सौधे तत्रैव तस्थतुः ॥ ८ ॥ अंधकारे घने जाते तत्रागात्सोऽपि राक्षसः

। अथाहो मानुषो गंधो वदन्निति पुनः पुनः ॥ ९ ॥ भद्रे ब्रूहि किमु क्वापि किंचित्तिष्ठति मानुषं । सोचेऽहं मानुषी ह्यन्यः कुतो मानुषसंभवः ॥ १० ॥

प्रसुप्तस्य ततः पादौ गुणवर्मा वधूमिषात् । मर्दयामास निर्भीको दक्षोऽलक्ष्योऽस्य रक्षसः ॥ ११ ॥ जजाप स्तंभनं मंत्रं विजयोऽपि यथाविधि । रक्षोऽपि मर्त्यगंधेनो—त्तस्थौ तल्पात्पुनः पुनः ॥ १२ ॥ यथा यथा यथा स उत्तस्थौ ममर्दान्यो भृशं तथा । शय्यायां सुखसंपर्का—न्निद्रालू राक्षसोऽलुठत् ॥१३॥ मंत्रजापे ततः पूर्णे मुक्ते पादविमर्दने । विचक्राम नरौ हंतुं तावुत्थाय स राक्षसः ॥ १४ ॥ अथोचे युवयोर्जातो दासोऽहं मंत्रयंत्रितः ॥ अत आदिशतं किं किं कर्त्तव्यमधुना मया ॥ १५ ॥ ततो जगाद विजय—चंद्रः पूरय मे पुरे ॥ भांडागारान् धनस्नेह—रत्नकांचनकोटिभिः ॥ १६ ॥ प्राकारहट्टगेहानां शोभां कृत्वा विधेहि च ॥ चेलोत्क्षेपसुगंध्यंभः—सेकस्वस्तिकतोरणान् ॥ १७ ॥ तदादिष्टमिदं सर्वं कुर्वाणे दासराक्षसे । आगाद्विजयचंद्रेणा—हूतस्तत्र पुरीजनः ॥ १८ ॥ मूलामात्यैः प्रमोदेन राज्ये विजयचंद्रमाः । अभिषिक्तो जनकव—त्पालयामास स प्रजाः ॥ १९ ॥ नामयामास सामंता—ननतानपि लीलया । प्रतापार्कातपातीव्रं जघानान्यायजं तमः ॥ २१ ॥

इत्थं राज्ये कृते स्वस्थे गुणवर्माणमाह सः । एतत्सर्वं मया प्राप्तं त्वत्साहाय्येन सत्तम ॥ २२ ॥ यत्त-वैवाखिलं राज्य—मादत्स्वेदं यदृच्छया । कुरु प्रत्युपकारांगी—कारेण मुदितं च मां ॥ २३ ॥ अभाणि श्रेष्ठिपुत्रेण । चंद्रवत्यां नरेश्वर । तौ मे पितृपितृव्यौ यौ श्रेष्ठिनौ स्तंभिनौ त्वया ॥ २४ ॥ तत्तयोर्बंधमोक्षं त्वं कुर्वेकं सह दुर्नयं । ततो राजा जगादैवं कालकूटात्सुधा हहा ॥ २५ ॥ तावुभावपि तादृक्षौ । त्वं तु सर्वोपकारकृत् ॥ अहो विधेर्विचित्रेयं सृष्टिर्दृष्टा मया स्फुटा ॥ २६ ॥ हे सत्पुरुष वाक्यं ते करिष्येहं किय-त्विदं । आकर्णय तदायत्तं पुनरस्तीह कारणं ॥ २७ ॥ पुरस्यास्य समीपस्थ एकशृंगाभिधे गिरौ । देवता-धिष्ठिता त्वेका सुगुप्ता कूपिका वरा ॥ २८ ॥

मीलदुन्मीलदस्त्यस्या मुखं नेत्रपुटे इव । अन्यच्च सलिलग्राही । भीतश्चेन्मृत एव सः ॥ २९ ॥ स्तं-भितस्यैव पुत्रेणा—नीतेनास्या जलेन चेत् । आच्छोट्यते पिता वद्ध—स्त्रीन् वारान् वीरकुंजर ॥ ३० ॥ बंध-मोक्षो भवेत्तर्हि नान्यथापि कथंचन । इत्याकर्ण्य वणिक् स्माह करिष्यामीदमप्यहं ॥ ३१ ॥ सामग्रिकां ततः कृत्वा । गतौ द्वावपि तत्र तौ । कूपिकाया मुखे क्षिप्तो वणिक्पुत्रो विकासिनि ॥ ३२ ॥ निर्भयो मंचिकारूढो राज्ञाकृष्य जलान्वितः । दक्षेण विकलद्वक्त्र—कूपिकाया बहिष्कृतः ॥ ३३ ॥ गृहीत्वा तज्जलं

मंक्षु तुरंगीभूतराक्षसं । आरुह्य तौ समायातौ नगर्यामिभ्यमंदिरे ॥ ३४ ॥ लोभाकरोऽभिषिक्तः स्व–जनको गुणवर्मणा । त्रिस्तेन सलिलेनाशु ततः सज्जीवभूव सः ॥ ३५ ॥ लोभनंदी द्वितीयस्तु तथैवास्थाद्व्यथार्दितः पुत्रं विना यतो नैव बंधमोक्षः कथंचन ॥ ३६ ॥ गुणवर्मोपरोधेन तुष्टेन विजयेंदुना । गृहांतः स्थापितः सोऽयं द्वितीयो विरसं रसन् ॥ ३७ ॥ मुद्रादेशादिदानाय नृपेणामंत्रितोऽपि सः । किंचनापि न जग्राह गुणवर्मात्र तस्थिवान् ॥ ३८ ॥ सत्कृत्यानेकधा राजा रसतुंबं समर्प्य तत् । पुनः स्वदेशयानाय । विसृष्टो गुणवर्मणा ॥ ३९ ॥ अर्पयित्वा तु तस्यैव तत्तुंबं गुणवर्मणः । संसर्गं तस्य न त्यक्तुं शक्तोऽपि क्षितिपो ययौ ॥ ४० ॥

अथायं निजवृत्तांतो निश्चयेत्य गुणवर्मणा । कथितो देवि मे सर्वं उपायनपुरस्सरं ॥ ४१ ॥ न्यासापहारसंभूतं दोषं पितृपितृव्ययोः । बहुधा क्षमितश्चाहं गुणिना गुणवर्मणा ॥ ४२ ॥ प्रिये सूरतनूजेन गतं राज्यमुपार्जितं । वालितं च निजं वैरं तेन तद्विजयेंदुना ॥ ४३ ॥ द्विःस्वीकृत्यापि मरणं सुतेन गुणवर्मणा । आपदंभोधिपतितः पिता पश्य समुध्धृतः ॥ ४४ ॥ ततो देवि कृतार्थास्ते येषां पुत्रा अहं पुनः । अनपत्यो हतात्मेति चिंतायाः कारणं मम ॥ ४५ ॥ कोऽर्चिष्यति गुरून् देवान् धर्मस्थानानि कः पुनः ।

उद्धरिष्यति मे पश्चा—त्कः कुलं धारयिष्यति ॥ ४६ ॥ मत्तो धारालपर्शोस्तु वंशोऽयं मूलकर्त्तनं । लप्स्यते तेन चित्ते मे चिंतावह्निर्ज्वलत्यलं ॥ ४७ ॥ ऊचे चंपकमालाथ भर्त्तुर्दुःखेन दुःखिता । देवेदं दुस्सहं दुःखं समानं ते ममापि हि ॥ ४८ ॥ केषांचित्तदपत्यानि धन्यानामंकसैकते । क्रीडंति मुग्धवाक्यानि प्रस्खलच्चरणानि च ॥४९॥ गेहं तदेव गेहं तु रणद्घर्घरकांह्रयः । द्वित्राः स्फुरच्छिखाः पुत्रा यत्र क्रीडंति लीलया ॥५०॥

तेनैव कृतकृत्यं स्वं नरजन्म विनिर्मितं । येनोत्तमरुचिः पुत्रः कुलदीपोऽत्र बोधितः ॥ ५१ ॥ पुत्रादिसंततिर्देव पुण्यपुंजेन लभ्यते । पुण्योपचयहेतोस्त—द्यतितव्यमिहाधुना ॥ ५२ ॥ सामर्थ्येन न चार्थेन यत्कार्यं नैव सिध्यति । स्वामिन् विवेकिनां तत्र न युक्ता परिदेवना ॥ ५३ ॥ ततः प्रसीद नाथ त्वं चिंतादुःखं हृदस्त्यज । चिंतादुःखार्तिसंतप्तो विनश्यति यतो नरः ॥ ५४ ॥ सत्यवादी यदि क्वापि कोऽपि देवः कथंचन । नरेंद्राराध्यते द्वाभ्या—मावाभ्यां पुत्रहेतवे ॥ ५५ ॥ ततस्तुष्टः सुतं दत्ते पूरयत्यात्मवांछितं । देवं विना पुनः शक्तिः कार्येऽस्तीदृशी कस्य वै ॥ ५६ ॥ हृष्टो राजा जगादाथ साध्वी बुद्धिः प्रिये तव । उपायः साधुराप्तस्त—देवं भवतु सुंदरि ॥ ५७ ॥ सुमुहूर्ते दिने देवं विधिना सत्यवादिनं । आवामाराधयिष्यावः सत्पुत्रोत्पत्तिहेतवे ॥ ५८ ॥ देवी स्माह पुनर्दीन—मुखी देव वचः शृणु । न जानेऽहं परं नेत्रे

दक्षिणं मे स्फुरत्यदः ॥ ५९ ॥ निमित्तेनामुना नूनं । कोऽपि भूतग्रहो मम । विद्युत्पातोऽथवा किंवा सर्वस्वापहृतिः क्षणात् ॥ ६० ॥ रोगातंकोऽथवा कोऽपि किंवापत्प्राणसंशया । भविष्यति ततः क्वापि । संपद्यते न मे रतिः ॥ ६१ ॥ युग्मं ॥

राजा जगाद मा भैस्त्वं मा कार्षीरधृतिं हृदि । आशंकिष्टा विरूपं मां स्फुरत्यंगमिदं यदि ॥ ६२ ॥ तथा च पालयत्यत्र मयि राज्यं कुतस्तव । भीशंकाप्युदिते सूर्ये तमोलेशोऽपि न प्रिये ॥ ६३ ॥ कथंचिद्यदि किंचित्ते भविष्यत्यशुभं प्रिये । त्वया सह ममाप्यग्नि—शरणं द्राक् पतंगवत् ॥ ६४ ॥ इति संस्थाप्य देवीं तां भयभ्रांतविलोचनां । सिंहासनोपविष्टः सन् राजा कार्यरतोऽभवत् ॥ ६५ ॥ यथा यथा स्फुरन्नेत्रं दक्षिणं सा तथा तथा । सौधे वने पुरे बाह्ये देवी नाप रतिं क्वचित् ॥ ६६ ॥ मध्याह्ने यावदागत्य पल्यंके क्षणमस्वपीत् । किंचित् किंचित्तदा निद्रा—सुखं सेवितुमादृता ॥६७॥ इतश्च तस्यां वेलायां ताडयंती शिरः करैः । चेटी वेगवती नाम्नी संप्राप्ता राजसन्निधौ ॥ ६८ ॥ सा जगादाश्रुधाराभिः क्षालयंती निजं मुखं । देव्याश्चंपकमालाया देव जानामि नापि किं ॥६९॥ इत्यर्द्धकथिते राजा श्रुत्वा देव्याः किमप्यदः । दृष्ट्वा चेटीं च शोकार्तां जगाद चकितो हृदि ॥ ७० ॥ हा देवी दैववशत—स्तत्राभूत्किम-

मंगलं । संजातं सफलं किं नु स्फुरितं दक्षिणेक्षणं ॥ ७१ ॥

हले वेगवति ब्रूहि विलंबं सहते न हृत् । देव्याश्चंपकमालाया बभूव किमु सांप्रतं ॥ ७२ ॥ रुदती वेगवत्याह धीर वीरशिरोमणे । द्वौ कर्णौ हृदयं चापि कुर्यास्त्वं विज्ञ कर्कशं ॥ ७३ ॥ दारयंती सतां हृंदि स्निग्धानि मधुराणि च । अतुच्छागच्छति स्वेच्छा वज्राशनिरियं प्रभो ॥ ७४ ॥ ईक्षणे दक्षिणे स्वामिन् प्रस्फुरत्यधिकाधिकं । सौधे वने पुरे बाह्ये लेभे देवी न शं क्वचित् ॥ ७५ ॥ मध्यंदिने समागत्य शय्यायां सुतया तया । अपरिच्छदया देव्या पत्रार्थं प्रेषिता त्वहं ॥ ७६ ॥ पत्राण्यादाय तत्पार्श्वे प्राप्ता यावदहं पुनः । तावत्काष्टमिवाचेष्टा देवी सा ददृशे मया ॥ ७७ ॥ न जानेऽहं परं किंचि-द्देव्याः प्राणाः कथं गताः । किं रोगेण विषेणाथ किं दुःखेनात्मयत्यया ॥ ७८ ॥

इदं दंभोलिपाताभं हालाहलसमं वचः । शृण्वन्नतुच्छमूर्च्छोऽगाद्भूपीठं भूमिवल्लभः ॥ ७९ ॥ वीजितः शीतलैर्वातैः संसिक्तश्चंदनद्रवैः । गतमूर्छः समुत्तस्थौ भूपतिर्विलपन्निति ॥ ८० ॥ रे रे निष्कृप दैवाहं प्रथमं किं न मारितः । देव्यमंगलवृत्तांतं नाश्रोष्यं येन कंचन ॥ ८१ ॥ अरे दैव त्वयात्मा मे—ऽर्द्धछिन्नो विहितः कथं । पश्चार्द्धमपि तद्विद्धि पल्लीपुच्छमिव स्फुरत् ॥ ८२ ॥ हा दैवावगमे देवि दक्षे

दक्षिणचक्षुषः । स्फुरणेन त्वयाख्यायि मृत्युर्नो रक्षिता मया ॥ ८३ ॥ अज्ञानोऽहं महापापो बुद्धिलेशोऽपि नास्ति मे । एवमेव स्थितो यस्माद्-ज्ञात्वापि विपदं तव ॥ ८४ ॥ स्वं निंदन्निति सिंचंश्च भूपीठं नेत्रवारिभिः । राजा परिजनं सर्वं दुःखयामास तं सदा ॥ ८५ ॥ पपात पुनरुत्तस्थौ क्षणं तस्थौ क्षणं ययौ । शून्यमालोकयामास विललाप नृपः क्षणं ॥ ८६ ॥ संभूय सचिवाः सर्वे दुःखभारेण भंगुराः । नृपं विज्ञपयामासु—र्भृशं गद्गदया गिरा ॥ ८७ ॥

शीघ्रं चलत हे स्वामिन् गत्वा तत्र विलोक्यते । देव्याश्चंपकमालायाः कावस्था कीदृशी पुनः ।८८। न ज्ञायते कदाप्येषा नाभिसंस्थितजीविता । हालाहलादिभावेन गतश्वासापि जायते ॥ ८९ ॥ इत्युक्तो मंत्रिभी राजा प्रस्खलच्चरणांबुजः । परिवारपरीतोऽगा—द्देव्यावासनिकेतनं ॥ ९० ॥ ददर्शासौ प्रियां तत्र निश्चेष्टां काष्ठवन्नृपः । अनुवाणामकुर्वाणां सर्वथा वपुषः क्रियां ॥ ९१ ॥ पपात सहसाऽतुच्छ—मूर्छाच्छादितचेतनः । भूपो भूमीतले भ्रांत—नयनः स्नेहवत्सलः ॥ ९२ ॥ उन्मीलिताक्षियुगलः सिक्तः शीतलवारिणा । उत्तस्थौ तदवस्थां तां देवीं दृष्ट्वा मुमूर्छ च ॥ ९३ ॥ मूर्छांतः पुनरुत्तस्थौ मुमूर्छ पुनरेव हि । उत्तस्थौ च पुनस्ताव—द्राजावस्थामिमां श्रितः ॥ ९४ ॥ सचिवास्तावदैक्षंत देव्यास्तत्सकलं वपुः । किंतु

क्वापि न तेऽपश्यन् दंष्ट्राघातव्रणादिकं ॥ ९५ ॥

अन्योऽन्यं मंत्रयामासुः सर्वे संभूय ते रहः । अक्षतांगी महादेवी किंतु प्राणा गता ननु ॥ ९६ ॥ तत्किं हृदयदुःखेन किं वा दैवेन वैरिणा । देव्याः प्राणा हृता अंग–मन्यथा कथमक्षतं ॥ ९७ ॥ मरिष्यति नृपो नूनं देवीस्नेहेन मोहितः । राज्यभ्रंशस्ततो भावी नास्ति राज्यधरो यतः ॥ ९८ ॥ ऊचे सुबुद्धिनामात्याः क्रियते काललंघनं । येन कालविलंबेन कोऽप्युपायः स्फुरेत्पुनः ॥ ९९ ॥ अन्यो मंत्री जगादाथ कालक्षेपः कथं पुनः । सुबुद्धिः स्माह राज्ञोऽस्य कथ्यते विषविक्रिया ॥ २०० ॥ जीवत्यद्यापि देवीयं नाभिपद्मस्थितासु का । क्रियते विषनाशोऽस्या मणिमंत्रौषधादिभिः ॥ १ ॥

मंत्रयित्वेति ते सर्वे स्तुवंतो मतिवैभवं । सर्वमावेदयामासु–र्भूपालस्यैत्य तत्तथा ॥ २ ॥ ततोऽमृतच्छटासिक्त इव सर्वांगमुच्छ्वसन् । इति स्माह प्रजापालो विकस्वरविलोचनः ॥ ३ ॥ भो भो धावत सर्वेऽपि शीघ्रमानयतौषधं । विषहंतॄन् मणींश्चापि निमंत्रयत मांत्रिकान् ॥ ४ ॥ राजादेशेन मिलिता सामग्री सकला ततः । सुबुद्धिशिक्षितैर्मंक्षु प्रारेभे मांत्रिकैः क्रिया ॥ ५ ॥ स्थापयित्वा रहो देवीं मंत्रिणो मांत्रिकैस्तथा । चिकित्सां कारयामासुर्यथा राज्ञेति चिंतितं ॥ ६ ॥ उत्थास्यत्यधुना देवी दृष्टिमुन्मीलयि-

ल्यति । इदानीं वक्ष्यति श्वासो वलिष्यत्यधुना पुनः ॥ ७ ॥ इति ध्यायति भूपाले दिनार्द्धं तन्निशापि सा । कथं कथंचित्कष्टेन धीसखैरनिवाहिता ॥ ८ ॥ प्रभाते सचिवाः सर्वे निरुपाया जगुर्मिथः । निपेतस्यातेऽधुना भूमा–नस्माभिर्मरणात्कथं ॥ ९ ॥ देवीस्नेहनिवद्धोऽयं मरिष्यति नरेश्वरः । स्नेहस्याऽकृत्रिमस्यास्ति न काप्यन्या गतिर्यतः ॥ १० ॥ राज्यं राष्ट्रं च कोशश्च चतुरंगा चमूरपि । वयं लोकाश्च निर्नाथा भविष्यामः कथं हहा ॥ ११ ॥

इति चिंताब्धिनिर्मग्ना–स्तस्थुः सर्वेऽपि मंत्रिणः । कांदिशीकाः समं शाखा—भ्रष्टाः शाखामृगा इव ॥ १२ ॥ दृष्ट्वा राजापि निश्चेष्टां पूर्ववन्निजवल्लभां । रुद्धकंठोऽतिदुःखेन विललाप सगद्गदं ॥ १३ ॥ एते सर्वेऽपि संजाता उपाया निष्फलास्त्वयि । केनोपायेन हा देवि नीरोगा त्वं भविष्यसि ॥ १४ ॥ अन्यैस्तैरुपचारैस्त्वं कालेनैतावतापि चेत् । न ब्रूपे तद्गता नूनं मुक्त्वा मामिह वल्लभे ॥ १५ ॥ दिवसेन समा यस्य त्वांविना घटिकापि मे । दिवसो मासवत्सोऽहं भविष्यामि प्रिये कथं ॥ १६ ॥ धिग्मे राज्यमिदं सर्वं धिक् शक्तिं धिक् च कौशलं । यदेषा रक्षिता नैव तदापद्विदतापि हि ॥ १७ ॥ त्यक्त्वा मां क्व गता देवि ममेतत्कथयैकशः । येन तत्रैत्य ते वीक्ष्य मुखं तृप्तो भवाम्यहं ॥ १८ ॥ जल्पन्निति पुनर्मूर्छा—मतुच्छां

ल्य-
८ ॥
नरिं
॥ १८ ॥

प्राप दुःखितः । शीतोपचारैरुत्तस्था-वुवाचैवं च मंत्रिणः ॥ १९ ॥ अहो मंत्रीश्वरा यूयं शृणुतैकं वचो मम । युष्माभिर्जीविता नैव देवी तावत्कथंचन ॥ २० ॥ तन्नूनमिह मर्त्तव्यं समं देव्या मयाधुना । प्राणा ममोड्डयिष्यंते यदस्या विरहे स्वयं ॥ २१ ॥ चितां कारयताह्वाय काष्ठैर्गोलानदीतटे । देवीवियोगदग्धोऽहं यद्भवाम्यत्र निर्वृतः ॥ २२ ॥ आहुःस्म मंत्रिणो नेत्र—जलक्लिन्नमहीतलाः । हाहाहा देव सहसा वयं याता रसातलं ॥ २३ ॥

अस्तं गते यथा सूर्ये भवंति कमलाकराः । पित्रोश्च मरणे बाला मत्स्या वा सलिलं विना ॥ २४ ॥ विना युष्मांस्तथा देव वयं पुण्यविवर्जिताः । दीना रुलंतो भूपीठे भविष्यामः कथं कथं ॥ २५ ॥ तत्प्रसीद विमुंचामुं मोहमाधेहि धीरतां । परिणाममम्मुं त्यक्त्वा स्वामिन् राज्यं चिरं कुरु ॥ २६ ॥ मास्म यह्नन् द्विषो राज्यं रुलन्मास्म प्रजाप्यसौ । माभूद्धरा निराधारा निर्नाथाभूम मा वयं ॥ २७ ॥ त्यक्ष्यंति यदि धीरत्वं स्वामिन् युष्मादृशा अपि । निराधारमिदं कुत्र स्थास्यत्यत्र समादिश ॥ २८ ॥ यद्देवी विगतप्राणा जाता तत्रापि कारणं । कर्मणां हि परीणामः संसारासारता तथा ॥२९॥ यतः—राजानः खेचरेंद्राश्च केशवाश्चक्रवर्तिनः । देवेंद्रा वीतरागाश्च मुच्यंते नैव कर्मणः ॥ ३० ॥ तन्नाथ कर्ममाहात्म्यं जानतां भवता-

मिह । युज्यते नेदृशं कर्तुं सर्वथा सुविवेकिनां ॥ ३१ ॥ जगादाथ प्रजानाथः शोकसंपूर्णमानसः । अहो मंत्रीश्वराः सर्व-मवगच्छाम्यहं पुनः ॥ ३२ ॥

देव्याः स्नेहेन मूढात्मा युक्तायुक्तं न वेद्म्यहं । अन्यच्चांगीकृतो मृत्यु-स्तया सार्द्धं मया तदा ॥३३॥ अकुर्वन् सुकरं चापि स्वजिह्वाजल्पितं वचः । असत्यवादिनां मध्ये रेखां पूर्वां स्पृशाम्यहं ॥३४॥ दिनानीयंति नो जातं ममाजन्म वचोऽन्यथा । म्रियेऽहं नो यदीदानीं तन्मे यात्यमृषाव्रतं ॥ ३५ ॥ तावज्जीवंति संतोऽत्र यावत्कुर्वंति भाषितं । मृता एवान्यथा सत्य-मथैतेषां हि जीवितं ॥ ३६ ॥ कुरुताहो ततः शीघ्रं देव्या मेऽपि च तां चितां । मध्ये चितानलं येन ददे दुःखजलांजलिं ॥ ३७ ॥ ब्रुवन्निति नृपो वार्य-माणोऽमात्यैरनेकधा । देवीस्नेहेन मरणा-न्न व्यरंसीत्कथंचन ॥ ३८ ॥ ततोऽमात्याः स्थिता याव-न्मौनमाश्रित्य सर्वथा । अन्ये लोका नरेंद्रेण तावत्तत्र प्रणोदिताः ॥ ३९ ॥ कृत्वा देव्याः शरीरस्य स्नानपूजादिकं ततः । तदुदक्षेपि तैर्लोकैः शिबिकास्थं सुमार्चितं ॥ ४० ॥ सार्द्धं चचाल भूपालः परिवारसमन्वितः । सबालवृद्धलोकेषु क्रंदत्सु करुणस्वरं ॥ ४१ ॥ दिने तस्मिन् पुरे तत्र जलमन्नं च केनचित् । न गृहीतं परं भूमिः सिक्ताश्रुसलिलैर्भृशं ॥ ४२ ॥ नाहसत्कोऽपि नाकार्षी-दालापं केनचित् सह । एकमेवान्वभूच्छोकदुःखं

कृष्णमुखो जनः ॥ ४३ ॥ वज्राहत इव क्ष्वेडा-घूर्णायमानवत्तदा । हृतसर्वस्ववच्छून्यहृदयोऽजनि पूर्जनः ॥ ४४ ॥ शकुंतैर्मुमुचे चूणि-स्त्यक्ता चारिश्चतुष्पदैः । शोकेन विवशैस्तत्र तल्लोकानां तु का कथा ॥ ४५ ॥ हा वत्स दैववातेन मंक्षु त्वं कुलदीपकः । विध्यापितोऽसि दुःखांध—कारे तेनापतन्मही ॥ ४६ ॥ वंशच्छेदो बभूवाद्य कोऽस्मच्चिंतां करिष्यति । इत्येवं कुलवृद्धासु विलपंतीष्वनारतं ॥ ४७ ॥ धौरेयान् राज्यभारस्य धिगस्मान् बुद्धिशालिनः । तदोच्चैरिति क्रंदत्सु महामात्यनरेषु च ॥ ४८ ॥ हा देव द्रक्ष्यसे क्व त्वं पुनः काममनोहर । इत्येवं पुरनारीषु रुदंतीषु पुनः पुनः ॥ ४९ ॥ पितृवत्पालिता देव रुलिष्यंति प्रजा इमाः । इति स्मरत्सु लोकेषु राजमार्गानुयायिषु ॥ ५० ॥ वर्ध्यंते तरवो देव सेचं सेचं यथांबुभिः । तथा युष्मत्प्रसादौघै-र्वयमाजन्मवर्द्धिताः ॥ ५१ ॥ म्रियमाणान् विना त्वां कोऽधुनास्मानुद्धरिष्यति । इत्येवं याचके लोके पुरो राज्ञः प्रजल्पति ॥ ५२ ॥ धीरता शूरता चापि दक्षता च गभीरता । दानं सत्यं च कारुण्यं दाक्षिण्यमुपकारिता ॥ ५३ ॥ निराधारा गुणाः सर्वे संजाला एवमादयः । सहास्माभिर्नरेंद्रेति ब्रुवाणे पंडिते जने ॥ ५४ ॥ हा देवेदं न युक्तं ते सर्वस्मिन्निति वादिनि । ददद्दानं नराधीशः प्राप गोलानदीतटं ॥ ५५ ॥ दशभिः कुलकं ॥

चितां कर्त्तुं समारेभे मुक्त्वा तत्र शवं नरैः । अत्रांतरे नृपेणापि स्नानं कर्त्तुं नदीजले ॥ ५६ ॥ जनशोकाश्रुकवोष्णेषु गोलानद्या जलोर्मिषु । स्नानं कुर्वन्नृपो याव—त्तस्थौ सोत्साहमानसः ॥ ५७ ॥ अनुश्रोतस्ततस्तावच्छुष्कं स्थूलतमं तदा । पुण्यै राज्ञो जनानां च काष्ठमेकं समाययौ ॥ ५८ ॥ तद् दृष्ट्वा मंत्रिणोऽवोच—न्नद्यंभस्तारकान् प्रति । चितायोग्यानि काष्ठानि संति स्तोकतराणि भोः ॥ ५९ ॥

आकर्षत ततो वेगा—दिदं काष्ठं समापतत् । इत्यादिष्टाः प्रविष्टास्ते गंभीरे निम्नगाजले ॥ ६० ॥ तदाकृष्य नदीमध्या—त्तीरमानीय तारकैः । मुक्तं राजा समालोकि सन्नद्धं बहुबंधनैः ॥ ६१ ॥ राजादेशेन बंधेषु छुर्या छिन्नेषु सेवकैः । तदंतः शुषिरं वेगा—दृष्ट्वं विघटितं द्विधा ॥ ६२ ॥ मध्ये तस्य विलिप्तांगी गोशीर्षचंदनद्रवैः । कस्तुरीघनसारादि—गंधद्रव्यैश्च चर्चिता ॥ ६३ ॥ कंठावलंबिसन्मुक्ताहारा निद्राकुलोचना । देवी चंपकमाला सा ददृशे दैवयोगतः ॥ ६४ ॥ युग्मं ॥ दृष्ट्वा नेत्रसुधाभां तां राज्ञा लोकेन चोदितं । अहो चित्रमहो चित्र—महो पुण्यमहाभरः ॥ ६५ ॥ यज्जीवंती महादेवी लब्धासाभिर्विना मृतिं । रत्नावली च कुर्वद्भिः क्रीडां कचवरोत्करे ॥ ६६ ॥ आनीता शिबिकामध्ये क्षिप्त्वा किंतु प्रियात्र सा । तत्किं नैषा न चाप्येषा किं चान्यच्छलकारणं ॥ ६७ ॥ प्रविष्टासौ च काष्ठे किं जीवंती

विभ्यती सती । ईक्षध्वं शिबिकामध्ये ततोऽह्वायैरुवाच राट् ॥ ६८ ॥

गत्वा राजनरा यावदपश्यन् शिबिकां ततः । संघर्षयत् करौ तावद्वंचितोऽस्मीति च ब्रुवन् ॥ ६९ ॥ दंतैर्दंतान् भृशं पिंष–दुध्ययौ तच्छवं दिवि । पश्यतां विस्मयेनाचैर्लोकानां विकसद्दृशां ॥ ७० ॥ युग्मं ॥ ततस्ते कंपमानांगा भयेनागत्य भूपतेः । स्खलद्गिरा गदंतिस्म सर्वमुत्सुकचेतसः ॥ ७१ ॥ नरेश्वरो जगादाथ विस्मयानंदपूरितः । वेत्ति व्यतिकरस्यास्य परमार्थं न कश्चन ॥ ७२ ॥ अस्तु तावत्परं सर्वं देव्येवेहानुयुज्यते । इत्युदित्वा नृपेणोचे स्वं वृत्तांतं वद प्रिये ॥ ७३ ॥ अपनिद्रा ततो देवी दृशं चिक्षेप भूपतौ । सस्नेहं मिलितेवेयं हर्षाद्वर्षशतादथ ॥ ७४ ॥ गलद्बाष्पाऽमिलद्देवीदृष्टी राज्ञो दृशा सह । तयोस्तदा स कोऽप्यासीद्धर्षो यं वित्त एव तौ ॥ ७५ ॥ देवी पप्रच्छ हे देव यूयं नद्यास्तटे किमु । गलज्जलानि वस्त्राणि युष्माभिः प्रावृतानि किं ॥ ७६ ॥

किमत्र मिलितो लोकः स्वामिन् किं रचिता चिता । शवस्य शिबिकेयं किं मृतः किं कोऽपि मे वद ॥ ७७ ॥ राजा जगाद निःशेषमिदं वक्ष्यामि देवि ते । किंतु त्वं निजवृत्तांतं पूर्वमाख्याहि नः स्फुटं ॥ ७८ ॥ क्व गता क्व स्थिता काष्ठे प्रविष्टा घुणवत्कथं । हारलाभः कथं नद्याः कथं वाहे प्रवाहिता

॥ ७९ ॥ देवी जगाद यथेवं यात यूयमिहाखिलाः । निकटस्थवटस्यास्य मूले छायातिशीतले ॥ ८० ॥ राजाथ हृष्टहृदयो गत्वा सर्वो जनोऽपि च । छायायां वटवृक्षस्य स्वे स्वे स्थान उपाविशत् ॥ ८१ ॥ ततो देवी निजं वृत्तं प्रारेभे गदितुं तदा । समाकर्णयतैकाग्रा यूयमित्युक्तिपूर्वकं ॥ ८२ ॥ देव त्वमपि जानासि स्फुरितं दक्षिणाक्षि मे । तेनाशुभनिमित्तेन नाभूत्कुत्रापि मे रतिः ॥ ८३ ॥ भ्रामं भ्रामं वनाद्येषु निर्विण्णा सौधमागता । ततो वेगवती दासी पत्रार्थं प्रेषिता मया ॥ ८४ ॥ निद्रया घूर्णमानाक्षी यावत्पल्यंकमाश्रिता । निद्राणा केनचित्तावदुत्क्षिप्ताहं दुरात्मना ॥ ८५ ॥ नत्वा तेन विमुक्ताहं शून्ये पर्वतमूर्द्धनि । स्वयं पलायितः क्वापि स दुष्टो निष्ठुरः पुनः ॥ ८६ ॥ कांदिशीका ततो भीतिकंपमानतनूरहं । दिशः सर्वाः प्रपश्यंती शिलातल्पात्समुत्थिता ॥ ८७ ॥

पुरः कमपि नापश्यं न पृष्ठे नापि पार्श्वयोः । शुश्राव केवलं शब्दान् सिंहव्याघ्रादिदेहिनां ॥ ८८ ॥ क्व गच्छामि क्व तिष्ठामि चिंतयंतीति चेतसि । कृत्वाथ साहसं वेगात्प्रस्थितैकां दिशंप्रति ॥ ८९ ॥ कुत्र सा नगरी रम्या क्व स मे प्राणवल्लभः । अपजह्रेऽहमेतेन किमकारणवैरिणा ॥ ९० ॥ उद्बंधयाम्यहं स्वं किं झंपामद्रेर्ददामि किं । स्वयं चेन्म्रियते ह्यत्र ततो दुःखाच्छुटाम्यहं ॥ ९१ ॥ इति ध्यायंत्यहं यावत्प्रस्ख-

लंती पदे पदे । गता स्तोकभुवं तावदद्राक्षं जिनमंदिरं ॥ ९२ ॥ त्रिभिर्विशेषकं ॥ गत्वा तत्र मयाथैवं संस्तुतो वृषभः प्रभुः । अंधकारे यथा दीपो मरौ पद्माकरो यथा ॥ ९३ ॥ अवृक्षाद्रौ यथा कल्पवृक्षः पोतो यथांबुधौ । तथा पुण्यैर्मयाप्तोऽसि छिंधि दुःखानि मे प्रभो ॥ ९४ ॥ युग्मं ॥ एवं विज्ञपयंत्या मे पार्श्वे नारी कुतश्चन । एका दिव्या समागत्य वक्तुमेवं प्रचक्रमे ॥ ९५ ॥ विलोक्य जिनभक्तिं ते दुःखभारं च सुंदरि । प्रकटास्म्यादिनाथस्य शासनस्याधिदेवता ॥ ९६ ॥

एतस्यादिजिनेंद्रस्य भवनिस्तारकस्य वै । वसंती भवने रक्षां कुर्वे चक्रेश्वरीत्यहं ॥ ९७ ॥ मलयाद्रौ ममैतस्मिन् भवनं तेन वर्त्तते । मलयेति द्वितीयं मे नाम लोके प्रसिद्धिभाक् ॥९८॥ तद्धीरा भव मा भैस्त्वं धीरयंत्यै मयेत्यथ । साधर्मिकीति पाणिभ्यां दत्तं वंदनमादरात् ॥९९॥ ततो देव मया पृष्टा सा देवी केन हेतुना । समानीता च केनाहं किं मिलिष्यामि बंधुभिः ॥३००॥ ऊचे चक्रेश्वरी देवी शुभे बंधुः प्रियस्य ते । वीरपालाभिधो वीरधवलस्याऽभवत्पुरा ॥ १ ॥ विविधान् स वधोपायांश्चिंतयन् राज्यकाम्यया । भूपस्य घातकीभूय प्रविष्टो मंदिरेऽन्यदा ॥ २ ॥ सोऽमुंचन्नृपतेर्घातं वंचयित्वा नृपोऽपि तं । घातंतमेकघातेन पातयामास भूतले ॥ ३ ॥ अंतेऽसौ शुभभावेन मृत्वोत्पन्नोऽत्र कानने । प्रचंडो मे परीवारे भृत्योऽपश्यद्-

गतं भवं ॥ ४ ॥ स्मृत्वा तदात्मनो वैरं नरनाथस्य पृष्टतः । छलं गवेपयन्नेष परिबभ्राम सर्वतः ॥ ५ ॥
न शशाक पुनः किंचित्कर्तुं राज्ञः सुकर्मणः । ततोऽसौ चिंतयामास पापिष्टो दुष्टचेतसि ॥ ६ ॥ देव्यां चंपकमालायां प्रेमबंधो नरेशितुः । स कोऽपि दृश्यते वीरधवलस्यापरे न यः ॥ ७ ॥ मरणेन ततो देव्या म्रियतेऽवश्यमप्ययं । एपापि न मया हंतुं शक्यते पुण्यपेशला ॥ ८ ॥ छन्नो भूत्वा छलं पश्यन्नपहर्तुं मनास्ततः । बभ्राम पृष्टतो लग्नो दुष्टो भूतः स सुंदरि ॥ ९ ॥ अथैका भुवने सुप्ता निद्राणा तेन सुंदरि । अपहृत्यात्र मुक्ता त्वं शैले मलयनामनि ॥ १० ॥ ततस्त्वमागतेदानीं भवने मिलितात्र मे । तुभ्यं ददामि किं ब्रूहि सफलो मेऽस्तु संगमः ॥ ११ ॥ ततोऽभाणि मया देवी यदि तुष्टासि देवि मे । ततोऽपत्यविहीनायाः प्रसीदापत्यदा भव ॥ १२ ॥ ततश्चोत्सुकचित्तेन नृपेणाभाणि वल्लभा । देव्या किं कथितं देवि परोपकृतिलीनया ॥ १३ ॥ ऊचे चंपकमालाथ देव देव्येति भाषितं । पुत्रः पुत्री च युग्मं ते भविष्यत्याशु सुंदरि ॥ १४ ॥ इयतो दिवसान् यस्माद्भूतेनानेन वैरिणा । युवयोः संतते रोधो विदधेऽनुचरेण मे ॥ १५ ॥ वारयिष्याम्यहं तं तु सांप्रतं भवतोर्द्वयोः । अपकुर्वंतमात्मीयं किंकरं वशवर्तिनं ॥ १६ ॥ अथोत्पन्नमहासौख्यः प्रशशंसेति तां नृपः । उत्पन्ना ते मतिः साधुस्त्वया साधु च मार्गितं ॥ १७ ॥

साध्वेष चोद्धृतो वंशः साधु चिंता हृता हृदः । त्वां विना मम दुःखानां संहर्त्ता कः परः प्रिये ॥ १८ ॥ यद्देवि यश्च मंत्रोऽयं प्रागासीत्तव ममापि च । पुत्रस्य विषये तत्ते दुःखिताया अपि स्मृतं ॥१९॥ तयाथो मलयादेव्या किं किं चोपकृतं तव । इत्युक्ते नरनाथेन प्रोचे चंपकमालया ॥ २० ॥ लक्ष्मीपुंजाभिधं हारं गृहाणामुं विवेकिनि । जल्पंत्येति तया क्षिप्तो हारो मे कंठकंदले ॥ २१ ॥ तयाभाणि च हारोऽयं दुर्लभः सुंदरि त्वया । सप्रभावः सदा शस्यो धार्यः कंठावलंबितः ॥ २२ ॥ अपत्यानि प्रभावंति भविष्यंति मनोरथाः । युवयोः पूरयिष्यंते हारस्यास्यानुभावतः ॥ २३ ॥ दत्तः सुवृत्तमुक्तानां हारोऽयं देव मे वरः । मलयाभिधया देव्या सतीर्थ्यत्वानुरक्तया ॥ २४ ॥ ततो मया पुनः पृष्टा सा देवी नरनायक । क गतो देवि भूतः स येनाहं मंदिराद्धृता ॥ २५ ॥ देव्युवाच ततो मुक्त्वा शुभे त्वामिह पर्वते । चंद्रावत्यां पुनः पुर्यां ययौ वेगेन सोऽमरः ॥ २६ ॥ त्वत्स्थाने च विकृत्याथ त्वदंगसदृशं शवं । तस्थौ तत्रैव भूतः स प्रच्छन्नः पापचेष्टितः ॥ २७ ॥ ततोऽकस्मादजीवां त्वां विलोक्य स्वासुवत्प्रियां । यद्दुःखमन्वभूद्राजा तज्जानाति स एव हि ॥ २८ ॥ युष्मद्दुःखे श्रुते प्राणसंशयेऽपृच्छि सा मया । किं जीविष्यति भूपालो मिलिष्यति कदा मम ॥ २९ ॥ तयावादि शुभे सप्तप्रहरांते नृपस्तव । अपि दुस्सहदुःखार्त्तः पुनर्जीवन् मिलिष्यति ॥३०॥

पृच्छाम्यहं पुनर्यावत्किं मे राजा मिलिष्यति । एका विद्याधरी तावत्सचेटी नभसाऽऽययौ ॥ ३१ ॥ इतश्च मम पश्यंत्या एव देवी तिरोदधे । एकाकिन्याः समीपे मे प्राप विद्याधरी तु सा ॥ ३२ ॥ विस्मिता खेचरी साह ममालोक्य तदैकिकां । दिव्यरूपा शुभे कासि शून्ये त्वमिह पर्वते ॥३३॥ ततः स्वकीयो वृत्तांतो मया तस्या निवेदितः । तया च भणितं हा हा विजृंभितमहो विधेः ॥ ३४ ॥

यदेषा भूपतेः कांता सुरूपा कुलसंभवा । हा हा निर्मानुषे शैले पतिता कलिता गुणैः ॥ ३५ ॥ शुभे त्वां नगरीं चंद्रावतीं भूयो नयाम्यहं । साधयिष्यामि विद्यां किंचिदानीमिह पर्वते ॥ ३६ ॥ साधयामि न चेद्विद्यामधुना तन्न सिध्यति । तद्दुःखे पतितायाः कमुपकारं करोमि ते ॥ ३७ ॥ एष एवोपकारस्ते ममास्तु कमलेक्षणे । यदत्र क्षणमात्रेण प्रियो मम समेष्यति ॥ ३८ ॥ स्त्रीलोलः स पुनश्चेत्त्वामीदृग्रूपामिहेक्षिता । करिष्यति ततो भार्यां शीलं ते खंडयिष्यति ॥ ३९ ॥ भविष्यति सपत्नीजं दुःखं मेऽपि सुदुस्सहं । तदेहि त्वं द्रुतं येन भवेत्सर्वं सुसूत्रितं ॥ ४० ॥ जल्पंतीति स्वहस्तेन गृहीत्वा मां नभश्चरी । आसन्नायास्तरंगिण्या वहंत्यास्तीरमन्वगात् ॥ ४१ ॥ मयाध्यायि किमेषा मां हनिष्यत्यथवा किमु । उद्बध्यतीह वृक्षाग्रे किं वा क्षेप्स्यति कंदरे ॥ ४२ ॥ किंवा नदीप्रवाहेऽत्र वाहयिष्यति वेद्मि न । किं-

वाथ चिंतया भूरिदुःखे दुःखमदुःखकृत् ॥ ४३ ॥ तत्राभूत्पतितं शुष्कं स्थूलं काष्टं स्वभावतः । विद्याशक्त्या ततश्चोर्द्धं तद् द्वेधा विहितं तया ॥ ४४ ॥

ते मध्ये शुषिरे कृत्वा दले द्वे पुरुषप्रमे । गोशीर्षचंदनेनाहं सर्वांगमन्वलिप्सि च ॥ ४५ ॥ कर्पूरागुरुकस्तूरीप्रमुखैर्गंधवस्तुभिः । समलंकृत्य खेचर्या तयाभाणीति मांप्रति ॥ ४६ ॥ एहि त्वं हे शुभे शीलं येन रक्षामि तेऽधुना । जल्पंत्येति तदा क्षिप्ता फालीमध्येऽहमेतया ॥ ४७ ॥ काष्टफाली द्वितीया च दत्ता मंक्षु ममोपरि । न जानेऽतःपरं किंचिद्गर्भावास इव स्थिता ॥ ४८ ॥ अधुनात्र मया दृष्टा यूयं प्राक्पुण्ययोगतः । युष्माकं कथितः स्वामिन् वृत्तांतोऽयं निजोऽखिलः ॥ ४९ ॥ नृपेणाभाणि देवि त्वं पतिता हा महापदि । प्राणत्यागः समारब्धो मयापि विरहे तव ॥ ५० ॥ ज्वलच्चिताप्रवेशं मे दृष्ट्वा लोकोऽपि दुःखितः । तेनैव मिलितः सर्वो गोलानद्यास्तटेऽधुना ॥ ५१ ॥ मंत्री सुबुद्धिरूचेऽथ सपत्नीशंकया तया । देवी चंपकमालैषा निक्षिप्ता काष्टसंपुटे ॥ ५२ ॥ काष्टसंपुटमेतच्च बध्ध्वालं रज्जुबंधनैः । नगोत्तरन्नदीवाहे खेचर्यात्र प्रवाहितं ॥ ५३ ॥ जीवघातेन नैवास्याः सा विद्या किल सिध्यति । तेनैव न हता देवी खेचर्यैवं प्रवाहिता ॥५४॥ अस्माकं पुण्यवत्काष्टं तरद्दूरात्तदागतं । दृष्टमादायि चास्माभिर्लब्धा देव्यप्यतर्किता ॥५५॥

यद्यपूर्वयामांते युष्माकं मिलिता प्रिया । सत्यं देवीवचो जातं सप्तयामांतसंगमात् ॥ ५६ ॥ नृपो जगाद न ज्ञाता माया भूतस्य केनचित् । अहो राज्यक्षयं कर्तुं प्रवृत्तस्यातिमायिनः ॥ ५७ ॥ कुलस्य कुशलं तत्वात्पुत्रं देवी यदर्थिता । उपाद्रवन्नयं भूतो वारितस्तद्वरं ततः ॥ ५८ ॥ आधारस्तीव्रदुःखानामपहारोऽपि ते प्रिये । उग्रौषधनयेनैष बभूव शुभहेतवे ॥ ५९ ॥ काष्ठफालयो नृपेणाथाऽमोच्येतां ते उभे अपि । भट्टारिकागृहे गोलानदीतीरविभूषणे ॥ ६० ॥ अत्रांतरे नरेंद्रस्य कालज्ञापनहेतवे । गंभीरोद्दामशब्देन पेठे वृत्तं सुवंदिना ॥ ६१ ॥ हेलोत्तीर्णविपद्धराणवजलः प्राप्तोल्लसद्धाः प्रियः । स्वैरं विश्रमया धराधरशिरश्चक्रे प्रतापं निजं ॥ तन्वानः सुपथो विकासिकमलामोदैर्जगत्प्रीणयन् । सर्वस्योपरि वर्त्तते रविरयं देवाधुना त्वं यथा ॥ ६२ ॥ ततः सुबुद्धिना राजा विज्ञप्तो देव सांप्रतं । संप्राप्तवांछिता यूयं पुरे गच्छत जेमितुं ॥ ६३ ॥ क्षुधापीडितगात्रापि देवीशक्ता न जल्पितुं । विस्मारयतु तद्दुःखं पूर्वं स्नानाशनादिभिः ॥ ६४ ॥ प्रतिदेवीं क्षिपन् राजा दृष्टिं स्नेहेन निर्भरां । गजारूढः प्रियायुक्तश्चचाल भवनंप्रति ॥ ६५ ॥ वाद्यमानेषु वाद्येषु पूरितांबरकुक्षिषु । पठत्सु वंदिवृंदेषु जय जीवेति मंगलं ॥ ६६ ॥ कृतासु हट्टशोभासु तत्कालं नागरैर्जनैः । निराकुल शुचं हर्षे सर्वतः परिसर्पति ॥ ६७ ॥ लोकानामाशिषः शृण्वन् गृह्णन्मंग-

चरित्रं

लकानि च । देव्या सार्द्धं महीपालो निजं सौधं समासदत् ॥ ६८ ॥ त्रिभिर्विशेषकं ॥

सामंतामात्यमुख्योऽपि लोकः सर्वोऽपि हर्षवान् । विसृष्टो भूपतिं नत्वा ययौ स्वं स्वं निकेतनं ॥६९॥ कृत्वा स्नानं नृपेणाथ देवपूजां च भोजनं । सकलेऽपि पुरे तस्मिन् वर्द्धापनमकारि च ॥ ७० ॥ तस्मिन्नेव दिने देवी दिव्याहारसमन्विता । गर्भं बभार सौभाग्यभाग्यसंभारशालिनी ॥ ७१ ॥ प्रवर्द्धमानगर्भस्याभिज्ञानानि यथा यथा । नृपोऽपश्यत्प्रमोदेन ममौ नांगे तथा तथा ॥ ७२ ॥ स देव्याः पूरयामास कल्पनां कल्पवृक्षवत् । कारयामास चांगस्य रक्षां दक्षो विशेषतः ॥ ७३ ॥

अथो दिनेषु पूर्णेषु राज्ञी पुण्यमुहूर्त्तके । सुषुवे युगलं पुत्रपुत्र्यो रूपगुणाधिकं ॥ ७४ ॥ नृपं वर्द्धापयामास दासी वेगवती तदा । नृपोऽप्यनाशयत्तस्या दासीत्वं दानकर्मभिः ॥ ७५ ॥ अपत्यागमहर्षेणोल्लसद्रोमा नरेश्वरः । आदिदेश दशाहानि स्पर्द्धावर्द्धापनं पुरे ॥७६॥ सुधाधौतानि सौधानि पौराणां चित्रितानि च । उत्तंभितानि सौवर्णमुशलानि हलानि च ॥७७॥ जनाः प्रज्ज्वालयामासुः श्रेण्यां कांचनदीपकान् । द्वारेषु स्थापयामासुः सौवर्णान् कलशांस्तथा ॥७८॥ स्थापिता लोकरक्षार्थं द्वारे कृष्टासयो भटाः । उच्छ्रिता मंदिरेषूच्चैर्वैजयंत्यः समंततः ॥ ७९ ॥ प्रमार्ज्य च पथो दासाः सिषिचुः कुंकुमद्रवैः । सहकारदलैरेते बबंधु-

स्तोरणानि च ॥ ८० ॥ राजमार्गेषु सर्वेषु त्रिकेषु चत्वरेषु च । रत्नकांचनदानादि दापयामास भूपतिः ॥८१॥ अमुंचद् द्वेषिणो बद्धान् काराः सर्वा अशोधयत् । अमारिं घोषयामास देशेऽसौ दशवासरान् ॥८२॥

पूजयामास बिंबानि जिनानां जिनमंदिरे । लोकं चकार चादंडयमकरं च नरेश्वरः ॥ ८३ ॥ नेदुर्दुंदुभयो दिव्या ननृतुर्वारयोषितः । अक्षतानां च पात्राणि विशंतिस्म नृपौकसि ॥ ८४ ॥ पुष्पतांबूलवस्त्राणि महार्घ्याभरणानि च । राजदत्तानि हर्षेण गृह्णंतेस्म च बंदिभिः ॥ ८५ ॥ युग्मजन्मोत्सवे तत्र प्रमोदेन पुरीजनः । न गेहे न च देहेऽपि ममौ क्वापि भवन्महान् ॥ ८६ ॥ सन्मान्याथ विशेषेण भोजनाच्छादनादिभिः । गोत्रवृद्धानुवाचैवं राजा द्वादशवासरे ॥ ८७ ॥ तुष्टया मलयादेव्याऽपत्ये दत्ते उभे इमे । अस्मभ्यमनपत्येभ्यो देवानामपि दुर्लभे ॥ ८८ ॥ देवीनाम्ना भवत्वस्य नाम युग्मस्य संप्रति । कुमारो मलयाकेतुः पुत्री मलयसुंदरी ॥ ८९ ॥ दत्वा नाम्नी तयोरेवं राजा राज्ञी च निर्वृतौ । स्मरंतौ मलयां देवीं तस्थतुस्तौ दिवानिशं ॥ ९० ॥ धात्रीभिः पंचभिर्नित्यं लाल्यमाने उभे अपि । फले इवैकवृंतस्या–पत्ये ते वृद्धिमापतुः ॥ ९१ ॥

यथा यथाहसच्छून्य–मजल्पच्चाऽस्फुटाक्षरं । विसंस्थुलपदन्यासं चक्रेऽपत्यद्वयं च तत् ॥ ९२ ॥ तथा

तथा तयोः पित्रो–र्ममौ हर्षो न मानसे । उदये रजनीजाने–र्नीरधेर्नीरपूरवत् ॥ ९३ ॥ लोकानां हस्ततो हस्ते संचरंतौ शिशू क्रमात् । समारूढौ वयो रम्यं सुखेनोत्तरमुत्तरं ॥ ९४ ॥ पितृभ्यां योग्यतां ज्ञात्वा समये तत्समर्पितं । शस्त्रशास्त्रादिदक्षस्य पंडितस्य शिशुद्वयं ॥ ९५ ॥ कुमारेण कुमार्या च यथायोग्यं कलाः किल । गृहीताः स्तोककालेन पूर्वाधीताः स्मृता इव ॥ ९६ ॥ अश्वेन कर्हिचित्क्रीडां कदाचित्कुंजरेण च । कदाचिदसिना चक्रे कुमारो धनुषापि च ॥ ९७ ॥ यथा यथा स चिक्रीड स्वैरमेवं तथा तथा । दुर्जनानां भ्रसत्कारः प्रमोदश्च सतां हृदि ॥ ९८ धात्री वेगवतीमुख्य–परिवारसमन्विता । उद्यानादिषु चिक्रीड कुमार्यपि यदृच्छया ॥ ९९ ॥ कारुण्यपुण्यहृदया मृदुमुग्धवाणी प्राणप्रिया सकलबंधुजनस्य दक्षा । बाल्योज्झिता मलयसुंदरिनामधेया सद्धर्मकर्मरसिका ववृधे कुमारी ॥ ४०० ॥

॥ इत्यागमिकश्रीजयतिलकसूरिविरचिते ज्ञानरत्नोपाख्याने मलयसुंदरीचरित्रे मलयसुंदरीजन्मवर्णनो नाम प्रथमः प्रस्तावः संपूर्णः ॥

---

॥ अथ द्वितीयः प्रस्तावः प्रारभ्यते ॥

अथापूर्वेव सा बाला यौवनेन विनिर्ममे । समुल्लासयतांगेषु लावण्यं लोचनप्रियं ॥ १ ॥ खलवत्कु-

टिलाः केशा माध्यं तुच्छं कुमैत्र्यवत् । सन्मनोरथवन्नाऽमात् तस्याः स्तनयुगं हृदि ॥ २ ॥ नासिका सरला तस्याः साधूनां चित्तवृत्तिवत् । केशपाशः प्रलंबश्च मैत्र्यभावः सतामिव ॥ ३ ॥ सुस्निग्धं लोचनद्वंद्वं जनन्या इव मानसं । कटाक्षवीक्षणं वक्त्रं तस्याः सापत्न्यकृत्यवत् ॥ ४ ॥ विलासिन्या इवाचारः सरागोऽधरपल्लवः । कंठो लेखाभिरामोऽभू—त्तस्याः स्वर्ग इवान्वहं ॥ ५ ॥ सुकुमारं वपुस्तस्याः शालिग्रामसुवर्णवत् । मनोहरवरच्छायं चाभवद्वटवृक्षवत् ॥ ६ ॥ सविलासा गतिस्तस्याः प्रशस्या वनभूरिव । विशालं जघनं चासीद्भूपानामिव पत्तनं ॥ ७ ॥ अंगे मालिकवत्सर्वे—ऽवयवाः सुमनोहराः । तस्या मलयसुंदर्या बभूवुर्यौवनागमे ॥ ८ ॥

इतश्चात्रैव भरते पृथ्वीस्थाने पुरेऽभवत् । विक्रमाक्रांतभूपालः सूरपालो महीपतिः ॥ ९ ॥ तस्यासीन्मेदिनीभर्त्तु—रतिरूपानुकारिणी । पद्मावतीति दयिता सर्वांतःपुरसुंदरी ॥ १० ॥ राज्ञस्तस्य कुमारोऽभू—न्मारस्रूपो वपुःश्रिया । महाबलोऽभिधानेन वीर्येणापि महाबलः ॥ ११ ॥ अन्यदोदारचित्तस्य कुमारस्यास्य संगतः । विद्यासिद्धः पुमानेकः स तेनावर्जितो भृशं ॥ १२ ॥ सम्यग्रूपपरावर्त्त—कारकास्तेन भापिताः । पुनः स्वरूपकर्त्तारो योगा राजांगजन्मनः ॥ १३ ॥ गृहीत्वाथ कुमारेण प्रयुक्तास्ते यथाविधि ।

ज्ञातसत्येन सत्कृत्य विद्यासिद्धो व्यसर्जि च ॥ १४ ॥ सूरपालनृपेणाथ प्रेषितैर्मंत्रिपूरुषैः । सार्द्धं वीरधवलस्य पार्श्वे कार्येण केनचित् ॥ १५ ॥ आपृच्छ्य पितरौ देशदर्शनाय कथंचन । कुमारोऽपि जगामैष पुरीं चन्द्रावतीं वरां ॥ युग्मं ॥ प्राभृतानि पुरो मुक्त्वा । नत्वा च नृपमादरात् । उपविष्टा यथास्थानं सर्वे तेऽमात्यपुंगवाः ॥ १७ ॥ पृष्टाश्चंद्रावतीशेन कुशलं सूरभूपतेः । प्रभो राज्ये शरीरे च ते सर्वेऽप्यकथन् शिवं ॥ १८ ॥ पप्रच्छे वीरधवलो राजा दृष्ट्वा महाबलं । क एष लक्षणोपेतः कुमारो मारविग्रहः ॥ १९ ॥ तेषामेकेन दक्षेण नरेणाभाणि हे प्रभो । स्नेहेन सममायातो ममैष लघुबांधवः ॥ २० ॥

इत्यालापे कृते पूर्वं राज्ञश्चंद्रावतीपतेः । तैरात्मस्वामिनः सर्वैः । कार्यभारो निवेदितः ॥ २१ ॥ ते सन्मान्य ततो राज्ञा विसृष्टाः सूरपुरुषाः । निजावासमनुप्राप्ताः कुर्वाणास्तत्प्रशंसनं ॥ २२ ॥ महाबलकुमारोऽथ बभ्रामाल्पपरिच्छदः । लोकलोचनलोलैणवागुरः पूर्दिदृक्षया ॥ २३ ॥ इतस्ततो भ्रमन् सैष स्वसौधांतिकमागतः । तया मलयसुंदर्याऽदर्श्यानंग इवांगवान् ॥ २४ ॥ तत्कालमाहता पंचबाणबाणैः समंततः ॥ कुमारी चिंतयामास हर्षोल्लसितमानसा ॥ २५ ॥ अहो मृदुतलौ पादावशोकपल्लवारुणौ । अहो कांतिभरोऽप्यस्य नखदर्पणसंभवः ॥ २६ ॥ अहो करिकराकारं जंघायुग्मं मनोहरं । रंभास्तंभोपमावूरू

अहो पुंसोऽस्य सुंदरी ॥ २७ ॥ अहा कटीतटाभोगो नाभेश्चाहो गभीरता । मुष्टिग्राह्यमहो मध्यं त्रिवली-परिशोभितं ॥ २८ ॥ वक्षःस्थले विशालेऽस्य धन्या कापि शयिष्यति । अतिदीर्घौ भुजादंडौ कस्याः कंठे लगिष्यतः ॥ २९ ॥ तेजोभरेण दुष्प्रेक्षा भांति पाणिनखा अमी । कृता दीपा दशाऽन्याय-तमो हंतुं दिशामिव ॥ ३० ॥ रेखास्तिस्राऽस्य शोभंते कंठे कंबुसमाकृतौ । मनसः स्वच्छतां द्रष्टुं संप्राप्तेव त्रिमार्गगा ॥ ३१ ॥ प्रवालदलसच्छायः स्वच्छो भात्यधरोऽप्ययं । मन्ये मां हृदयाद्द्रष्टु-मनुरागो बहिः स्थितः ॥ ३२ ॥ कटरे सरला नासा कपोलौ कामदर्पणौ । नेत्रे कर्णांतविश्रांते श्रवणौ स्कंधसंगतौ ॥ ३३ ॥ श्यामः केशकलापोऽस्य राजते शिरसि स्थितः । नवशाड्वलतारुण्य-वृक्षस्येव दलोच्चयः ॥ ३४ ॥

कुमारमिति पश्यंती तं सर्वांगमनोहरं । चित्रन्यस्तेव सा याव-त्तस्थौ मलयसुंदरी ॥ ३५ ॥ महाबलोऽपि तां ताव-त्पश्यन् वातायनस्थितां । दध्याविल्यवतीर्णा किं स्वर्गात्कापीयमप्सरा ॥ ३६ ॥ गाढानुरक्तया दृष्ट्या पश्यंती मां पुनः पुनः । हरत्येषा मनो मे किं परिणीताथवा कनी ॥ ३७ ॥ दध्यौ सापि कुमारीति क एष कस्य नंदनः । कुमारो मेऽहरच्चित्तं पश्यन् स्नेहलया दृशा ॥ ३८ ॥ उत्सुका सा ततो भूर्जे लिखित्वा श्लोकयुग्मकं । प्रच्छन्नं निजचित्तेन सार्द्धं चिक्षेप तंप्रति ॥ ३९ ॥ कुमारेणापि तज्ज्ञात्वा

रोमांचं दधता तनौ । कुमार्या सह हर्षेण वाचितं निजचेतसि ॥ ४० ॥ कोऽसि त्वं तव किं नाम क वास्तव्योऽसि सुंदर । कथय त्वयकाजह्रे मनो मे क्षिपता दृशं ॥ ४१ ॥ अहं तु वीरधवल-भूपतेस्तनया कनी । त्वदेकहृदया वर्त्ते नाम्ना मलयसुंदरी ॥ ४२ ॥

ईक्षांचक्रे कुमारोऽथ कन्यां मलयसुंदरीं । निर्निमेषाक्ष एकाग्र-मानसो योगिराजवत् ॥ ४३ ॥ तयोस्तथा मिथो लग्ना देहे दृष्टिस्तथाचिरात् । जतुयुक्तेव जंबाल-कलितेवोत्पपात न ॥ ४४ ॥ लोचनान्येव जानंति संबंधं पूर्वजन्मनः । यतो हर्षं प्रिये दृष्टे वहंति वाऽप्रिये रुषं ॥ ४५ ॥ दृष्टिभ्यां दर्शिताध्वाना-वात्मानौ व्यत्यये स्थितौ । तयोः सिद्धः परपुर-प्रवेशो ध्यानतां विना ॥ ४६ ॥ दृष्टी मेलयता तेना—ऽनुरागसूत्रधारिणा । तथा तौ मेलितौ सम्यग् यथा संधिर्न लक्ष्यते ॥ ४७ ॥ कुमारोऽचिंतयत्तात्र-देतया ज्ञापितो निजः । विदग्धयानुरागो मे सपरिच्छदयापि हि ॥ ४९ ॥

इति ध्यायन् कुमारः स यावत्तस्थौ सुनिश्चलः । तत्रागत्य पुमानेक-स्तावत्तंप्रत्यभाषत ॥ ५० ॥ कुमारालं विहारेण नगर्यामेहि मंदिरं । प्रयाणमधुना येन भविष्यति पुरंप्रति ॥ ५१ ॥ अहो मनोहरा एते प्रासादा गोपुरान्विताः । अहो वातायना रम्याश्चित्तमत्रैव मे स्थितं ॥ ५१ ॥ ब्रुवन्निति कुमारोऽथ

पश्चाद्ग्रीवं पुनः पुनः । पश्यन्नावासमानीतस्तेन पुंसा कथंचन ॥ ५२ ॥ युग्मं ॥ दध्यौ कुमार औत्सुक्या-दहो मम समर्थता । आत्मानमपि यत्तस्याः प्रकाशयितुमक्षमः ॥ ५३ ॥ तया पृष्टो न शक्तोऽहं अपि दातुं तथोत्तरं । अहो कलासु नैपुण्यमहो विदग्धता मम ॥ ५४ ॥ अत्रागतोऽपि नाहं चेन्मिलिष्यामि तया सह । आवयोस्तत्कथं मेलः पश्चात्तापः सदा मम ॥ ५५ ॥ तत्संजाताधुना रात्रिस्तिमिरेण विजृंभितं । ततो यावज्जनोऽप्येष प्रयाणप्रगुणो भवेत् ॥ ५६ ॥ प्रच्छन्नस्तावदेकाकी तत्र गच्छामि संप्रति । तस्या विरह-खिन्नाया मिलित्वा तं ब्रवीम्यहं ॥ ५७ ॥ युग्मं ॥ ध्यात्वेति प्रगुणीभूय निःसृत्यालक्षितो निशि । कुमारी भवनाधस्तात्कुमारः प्राप सत्वरं ॥ ५८ ॥ प्राकारं तं समुल्लंघ्य विद्युत्क्षेपानुकारिणा । करणेनाविशद्वेगा-त्प्रथमां सौधभूमिकां ॥ ५९ ॥

वसंत्या तत्र कनकवत्या राजन्यभार्यया । अपरिच्छदयादर्शि कुमारः प्राविशन्निशि ॥ ६० ॥ धैर्येण कलितोऽपूर्वो दिव्यरूपः क एष ना । कथं चात्र प्रविष्टोऽयं द्वारपालेषु सत्स्वपि ॥ ६१ ॥ तन्नूनं खेचरः कोऽपि नरः सत्वाधिकोऽथवा । प्रयोजनेन केनापि हृष्टचित्तः समेत्ययं ॥६२॥ ध्यायंतीति कुमारस्य दिव्य-रूपेण मोहिता । नरेंद्रवल्लभा वक्तुं प्रारेभे तं प्रतीति सा ॥ ६३ ॥ त्रिभिर्विशेषकं ॥ भो भो नरोत्तमाग-

च्छ त्वमास्यात्रासने वरे । मां मानय च निःशंकं मम पूरय वांछितं ॥ ६४ ॥ कुमारश्चिंतयामास किमेषा राजवल्लभा । राजस्त्वसाथ किं नूनं राज्ञी वेयं विचार्यते ॥ ६५ ॥ यद्यात्मा मुच्यते स्वैरं प्रविष्टैः स्थान ईदृशि । नारीभिर्मुह्यते ब्रह्मव्रतं स्वस्य च खंड्यते ॥ ६६ ॥ तदा समीहितं कार्यं साध्यते नोत्तमैर्नरैः । इति निश्चित्य हृदये कुमारस्तामभाषत ॥ ६७ ॥ योग्यं मलयसुंदर्या लात्वाहं किंचिदागतः । तद् ब्रूहि सत्वरं राज्ञः सा कन्या कुत्र तिष्ठति ॥ ६८ ॥ पश्चाद्भणिष्यसि त्वं यत्करिष्येऽहं तदेव हि । इत्युक्ते दर्शितो मार्ग ऊर्ध्वभूमेस्तया ततः ॥ ६९ ॥

ऊर्ध्वभूमिं समारूढे कुमारे सा नृपप्रिया । अनुगम्य स्थिता द्वारे प्रच्छन्ना शृण्वती वचः ॥ ७० ॥ ययौ यावत्कुमारः स कुमारीवासवेश्मनि । तावद्ददर्श तां बालां विन्यस्तास्यां करांबुजे ॥ ७१ ॥ तत्रैवासनआसीनां पश्यंतीं तां दिशं मुहुः । एकाग्रमानसां किंचिद्ध्यायंतीं श्यामलाननां ॥ ७२ ॥ युग्मं ॥ कुमारेण ततः प्रोक्त–मितः पश्य मृगेक्षणे । सोऽहं पुरोऽत्र तिष्ठामि निःसृत्य हृदयात्तव ॥ ७३ ॥ निशम्य वलितग्रीवं सुधासममिदं वचः । तं दृष्ट्वा सा ह्रिया जज्ञे हसंती द्रागधोमुखी ॥ ७४ ॥ कुमारेणोदितं चित्त–सर्वस्वं मे त्वयार्पितं । श्लोकयुग्मेन यत्पृष्टं मत्स्वरूपं च तत श्रुणु ॥ ७५ ॥ पृथ्वीस्थानपुरे रम्ये

सूरपालनरेशितुः । देवीपद्मावतीजातः पुत्रो नाम्ना महाबलः ॥ ७६ ॥ देशस्य दर्शनायात्र परिवारसम-न्वितः । सर्वामलकलावास आगतोऽहं वरानने ॥ ७७ ॥ युग्मं ॥ इमामाश्चर्यसंपूर्णां नगरीमवलोकयन् । तव प्रासादमूलेऽत्र प्रदेशे यावदागमं ॥ ७८ ॥ तावत्तव ममाप्येष संजातो दृष्टिमेलकः । दर्शयन् कमपि स्नेहं मिथो जन्मांतरोद्भवं ॥ ७९ ॥ अतःपरं च यज्जातं तदत्र प्रकटं तव । प्रविश्य संकटेऽप्यत्र मिलितोऽस्मि तवाधुना ॥ ८० ॥ तदहं यामि येनाशु प्रयाणं संभविष्यति । परिवारजनः सर्वो मुक्तः सज्जीभवन्मया ॥ ८१ ॥ सोचे सुभग गंतव्यं न त्वया स्थेयमत्र तु । तवाऽदर्शनतो येना-हं प्राणान् धर्तुमक्षमा ॥ ८२ ॥ यदि यास्यसि त्वत्वा मा-मवज्ञायातिनिष्ठुरः । त्वया सुभग दातव्य-स्तन्मे प्राणजलांजलिः ॥ ८३ ॥ तत्प्रसीदात्र तिष्ठ त्वं संपूरय ममेप्सितं । यावत्पश्याम्यहं त्वां मे तावत्सुभग निर्वृतिः ॥ ८४ ॥ अन्यच्चाहमिहातिथ्यं किं करोमि कुमार ते । एकं तावन्मया तुभ्य-माजन्मात्मा समर्पितः ॥ ॥ ८५ ॥ लक्ष्मीपुंजमिमं हारं ग्रहाण त्वं द्वितीयकं । जल्पंतीति निचिक्षेप हारं कंठेऽस्य सा निजं ॥ ८६ ॥ उवाच च मया हार-मिषादेष गले तव । प्रक्षिप्ता वरमाला तद् गंधर्वोद्वाहमातनु ॥ ८७ ॥ त्वया सार्द्धमहं पश्चा—दागमिष्यामि सुंदर । वियोगजनितं दुःखं माभूत्कर्हिचिदावयोः ॥ ८८ ॥ कुमारेण ततः

प्रोचे युक्तमुक्तं त्वयाखिलं । स्वकीयचित्तसंकल्पः साधु साधु निवेदितः ॥ ८९ ॥ परंतु जनप्रत्यक्षं पितृभ्यामिह दीयते । यावत्कन्या कुलीनानां तावद्वोढुं न सांप्रतं ॥ ९० ॥ मास्म ताम्यः शुभे त्वं त–न्मा भूश्चोत्सुकमानसा । तिष्ट निर्वृतचित्तात्र सुखेन कतिवासरान् ॥ ९१ ॥ बुद्धिं तथा तथा धास्ये यतिष्येऽहं तथा तथा । यथा दत्तां पितृभ्यां त्वां परिणेष्याम्यहं ननु ॥ ९२ ॥ विशालाक्षि प्रतिज्ञैषा मया चक्रे पुरस्तव । सुप्रसन्नाधुना भूत्वा त्वं मां विसृज सुंदरि ॥ ९३ ॥ तया कनकवत्या तु प्रच्छन्नं द्वारभूस्थया । तयोर्व्यतिकरः सम्य–गेष दृष्टः श्रुतोऽपि च ॥ ९४ ॥ क्रुद्धा साऽचिंतयन्नूनं कोऽप्येष विप्रतार्य मां । कृतसंकेतको वीरः कुमारीपार्श्वमभ्यगात् ॥ ९५ ॥

द्वारं पिधाय सहसा तया दत्तं च तालकं । ददतो तालकं दृष्टा सा ताभ्यां च दुराशया ॥ ९६ ॥ कुमार्योक्तमियं मातुः सपत्नी जननी मम । नाम्ना कनकवत्यत्र सौधाधोभुवि वासिनी ॥ ९७ ॥ एतया छन्नया द्वारे स्थितया व्यतिकरः श्रुतः । वीक्षितश्चावयोः सर्वो दत्तं तेनेति तालकं ॥ ९८ ॥ तदेषा कुपिता किंचि–दनर्थं चालयिष्यति । न ज्ञाता हा मयाप्येषा सपत्नी मातुरागता ॥ ९९ ॥ कुमारः स्माह कामार्थ–मागच्छन् प्रार्थितोऽनया । किंतु कूटोत्तरं कृत्वा–ऽहमायातोऽत्र सुंदरि ॥ १०० ॥ मम पृष्टे विलग्नेयं नूनं

हेरितुमागता । अस्मद्व्यतिकरं दृष्ट्वा जाता कोपपरा ध्रुवं ॥ १ ॥ जल्पंताविल्यभूतां तौ यावत्तावन्यवेदयत् । गत्वा कनकवत्येत-त्सविशेषं क्षमापतेः ॥ २ ॥ राजा समाययौ तत्र ततो रोपारुणेक्षणः । हत हतेति जल्पद्भिः सुभटैर्वेष्टितो भृशं ॥ ३ ॥ कांदिशीका जगादाथ राजकन्या विमूढधीः । भविष्यसि कथं त्वं हा कुमार प्रवराकृते ॥ ४ ॥ धिक् पापां विपकन्यां मां या जाता क्षयकारिणी । पुण्यप्राग्भारलभ्यस्य पुंरत्नस्य तवाधुना ॥ ५ ॥ मा भैस्त्वमपि मा ध्यासी-रनिष्टं किंचनापि मे । इति जल्पन् स्वधम्मिला-त्कुमारो गुटिकामधात् ॥ ६ ॥ गुटिकायाः प्रभावेण प्रक्षिप्ताया मुखांतरे । रूपं चंपकमालाया दृष्टाया राजसन्निधौ ॥ ७ ॥ कृत्वा कुमार आसीनः कुमार्याः सन्निधौ क्षणात् । तथाभूतं तमालोक्य कुमारी च विसिस्मये ॥ ८ ॥ युग्मं ॥

भंक्त्वा तालकमुद्घाट्य द्वारं यावत्समीक्षितं । दृष्टा मातृयुता ताव-द्राज्ञा मलयसुंदरी ॥ ९ ॥ राज्ञा कनकवत्यास्या-ऽभिमुखं वीक्ष्य भाषितं । प्रिये पश्य स्वयं ताव-त्त्वया किं कथितं मम ॥ १० ॥ यावदैक्षत मध्ये सा कुमारीं मातृसंयुतां । तावद्विलोक्य वेगेन विलक्षवदनाऽभवत् ॥ ११ ॥ स्मयमानः कुमारोऽथ जगादागच्छ हे स्वसः । राजा किं कुपितः कस्मै किं मह्यमपि तद्वद ॥ १२ ॥ जल्पंतीमिति चंपक—

मालामालोक्य ते जनाः । आक्रोशंतिस्म सर्वेऽपि तामेव नृपवल्लभां ॥ १३ ॥ ततः कनकवत्याख्य–द्धारो दत्तोऽनया प्रभो । इहागताय कस्मैचि–द्वीरायाऽतः स ईक्ष्यतां ॥ १४ ॥ श्रुत्वा कनकवत्यास्त–द्वाक्यं भूपतिसूनुना । स तथोच्छालितो हारो यथा दृष्टोऽखिलैर्जनैः ॥ १५ ॥

ततो व्यावृत्य ते सर्वे स्वं स्वं स्थानं ययुः क्षणात् । दध्यौ कनकवत्येवं सविषादा स्वचेतसि ॥१६॥ क्व गतः स कथं जातः कुमारो यो मयेक्षितः । किं मे हताशमनसः संजातः कोऽपि विभ्रमः ॥ १७ ॥ हाहाऽहं निंदिता सर्वै–र्विख्याता कूटभाषिणी । तदेतस्याः कुमार्या मे लघुताभवदीदृशी ॥ १८ ॥ वैरिणी· वाथ सेयं वै नूनं मलयसुंदरी । गच्छंति भाषमाणापि ममोद्वेगं करोत्यलं ॥ १९ ॥ कदा कथं महानर्थे पतिष्यति मरिष्यति । कदा चैपेति कनक–वत्यस्थाश्चिंतयंत्यलं ॥ २० ॥ मुखादाकृष्य गुटिकां कृत्वा रूपं निजं ततः । कुमारः स्माह तन्वंगि गुटिकावैभवं ह्यदः ॥ २१ ॥ तिष्ठतोऽत्र पुनः किंचिद्विरूपं मे भविष्यति । द्रुतं तद्याम्यहं त्वं तु तिष्ठेः स्वस्थात्र सुंदरि ॥ २२ ॥ आवयोरनुकूलोऽस्ति विधिः संप्रति वेद्म्यहं । संयोगो दुर्लभो यस्मा–देषोऽभूदवितर्कितः ॥ २३ ॥ करिष्यति स एवेदं कार्यां चिंता त्वया न हि । श्लोकोऽयं सर्वदा ध्येय—श्चित्तस्वास्थ्यविधायकः ॥२४॥ विधत्ते यद्विधिस्तस्या—त्र स्याद् हृदयचिं·

तितं ।.एवमेवोत्सुकं चित्त–मुपायांश्चिंतयेद्बहून् ॥ २५ ॥

टंकोत्कीर्ण इव श्लोको लग्नस्तस्या अयं हृदि । स्वं शिरो धुन्वती तस्थौ तत एषा मृगेक्षणा ॥२६॥ शिवास्ते संतु पंथानः कुमारेत्युक्तिपूर्वकं । पश्यंत्यां दीर्घया दृष्ट्या कुमार्यामनिमेषया ॥ २७ ॥ ततो निः-सृत्य केनापि न ज्ञातः स महाबलः । यथाऽयातस्तथा यातः स्वजनानां च संगतः ॥ २८ ॥ युग्मं ॥ चिंतयन् परिणेतुं तां स उपायाननेकशः । पृथ्वीस्थानपुरं प्राप—द्विलंबप्रयाणकैः ॥ २९ ॥ प्रणम्य च-रणौ हार—मर्पयामास तं पितुः । नृपोत्तरं च चक्रे स कुमारः सारविक्रमः ॥ ३० ॥ चंद्रावतीशपुत्रेण संतुष्टेनैष सौहृदात् । लक्ष्मीपुंजाभिधानो मे हारः सारः समर्पितः ॥ ३१ ॥ राजा जगाद हे वत्सा—ऽतुच्छा कापि कला तव । मैत्री यदीदृशी जज्ञे तेन स्तोकदिनैरपि ॥ ३२ ॥ प्रशंसन्निति तं पुत्रं तं हारं दिव्यमादरात् । पद्मावत्यै कुमारस्य जनन्यै व्यतरन्नृपः ॥ ३३ ॥ प्रशंसंती निजं पुत्रं देव्यपि हृष्टमा-नसा । निजकंठे निचिक्षेप तं हारं कांतिभासुरं ॥ ३४ ॥ कुमारोऽथ निजे चित्ते दध्यावेवं दिवानिशं । पितृदत्तां कथं कन्यां परिणेष्यामि तामहं ॥ ३५ ॥ सुदुर्वहा पुरस्तस्याः कृता संधा मया तदा । निर्वाह्या कथमेषा तु रहस्यं कस्य कथ्यते ॥ ३६ ॥

इति चिंतापरे तत्र समागाद्दूतपूरुषः । चंद्रावतीनरेंद्रेण प्रेषितः प्रीतिशालिना ॥ ३७ ॥ प्रणम्य भूपतिं दूतः प्रतीहारनिवेदितः । कार्यं निवेदयामास क्षेमवार्त्तापुरस्सरं ॥ ३८ ॥ अस्माकं स्वामिनो वीर–धवलस्यास्ति भूपतेः । कुमारी मारभार्याभा नाम्ना मलयसुंदरी ॥ ३९ ॥ प्रारब्धे देव भूपेन तन्निमित्तं स्वयंवरे । सर्वत्र प्रहिता दूता आह्वातुं नृपनंदनान् ॥ ४० ॥ युष्मत्पार्श्वे त्वहं देव प्रेषितोऽस्मन्महीभुजा । महाबलं कुमारं तमाह्वातुं रूपदर्पकं ॥ ४१ ॥ अथास्ति ज्येष्ठमासस्य कृष्णैपेकादशी तिथिः । आगामिन्यां चतुर्दश्यां भवितैष स्वयंवरः ॥ ४२ ॥ प्रेषितस्य ममाभुवन् वासरा बहवः परं । मंदीभूतोंतरालेऽहं विलंबस्तेन हेतुना ॥ ४३ ॥ अतः प्रसीद देवाशु कुमारं प्रेषयाधुना । विलंबः सहते नैव यतो लग्नं समीपगं ॥ ४४ ॥ हृष्टचित्तस्ततो राजा सर्वं स्वीकृत्य तद्वचः । वस्त्रादिभिश्च सत्कृत्य दूतं प्रेषितवान् पुनः ॥ ४५ ॥ कुमारोऽपि सभासीनः सर्वमाकर्ण्य तद्वचः । प्रमोदपूर्णहृदय–श्चिंतयामासिवानिति ॥ ४६ ॥ मया स्वकीयचिते च यच्चार्त्तं जातमेव तत् । इतः क्षुधासमुल्लास इतः स्थालेऽपतत्सिता ॥ ४७ ॥ सामर्थ्येनापि चार्थेन यत्कार्यं संशये स्थितं । तदहो दैवयोगेन मुष्टिमध्ये समागतं ॥ ४८ ॥ चिंताभारः कियानेष मूलाज्झटिति निष्ठितः । प्रणष्टो दुःखसंचारः पूर्णं तोषेण मानसं ॥ ४९ ॥

सिद्धं विंशोपकान् कार्यं यावदेकोनविंशतिं । कष्टरे पुण्यमाहात्म्य-मनुकूलो ध्रुवं विधिः ॥ ५० ॥ तातादेशेन गत्वाहं परिणेष्यामि तत्र तां । कृतार्थश्च भविष्यामि कुमारानवमंन्य तान् ॥ ५१ ॥ इति हर्षाकुले तस्मिन् कुमारे प्रक्षिपन् दृशं । राजा जगाद हे वत्स गच्छ त्वं द्राक् स्वयंवरं ॥ ५२ ॥ निश्चयैव प्रयाहि त्वं रथोद्दामबलान्वितः । मान्योऽस्माकं यतो वीर-धवलोऽसौ महान्नृपः ॥ ५३ ॥ संयोज्याथ करौ शीर्षे कुमारो नामयन्निजं । उवाचेति प्रमाणं मे तातादेशः प्रमोदकृत् ॥ ५४ ॥ सज्जीभवति सैन्येऽथ गमनाय नृपाज्ञया । राज्ञोचे वत्स तं हारं गृहाण सह सुंदरं ॥ ५५ ॥ कुमारेण ततोऽभाणि न जाने तात कारणं । अलक्षः कोऽपि निद्राण-मुपद्रवति मां निशि ॥ ५६ ॥ कदाचिद्धरते वस्त्रं शस्त्रं चाभरणं तथा । कदाचिद्रौद्रशब्देन सोऽट्टहासं च मुंचति ॥ ५७ ॥ लक्ष्मीपुंजो मया हारो गृहीतो मातृकंठतः । सुतस्याद्य हृतस्तेन रजन्यां मम पार्श्वतः ॥ ५८ ॥ ज्ञात्वा तं तु गतं हारं देवी दुःखं तथाकरोत् । यथाहं मातृदुःखेन भृशं चिंताकुलोऽभवं ॥ ५९ ॥

प्रतिज्ञाथ कृतास्तीति देव देव्याः पुरो मया ॥ पंचाहांतर्न चेद्धारं ददेऽग्निं साधये तदा ॥ ६० ॥ देव्यापि भणितं देव तं हारं न लभे यदि । मर्त्तव्यं तन्मया नूनं संदेहो नात्र विद्यते ॥ ६१ ॥ अदृश्यः

कोऽपि भूतोऽयं घटते वाथ राक्षसः । जन्मांतरस्य वैरी मे प्रचंडः परमेश्वरः । ६२ ॥ एकं द्वौ त्रीन् वा यामान् यावदद्य ततो निशि । स्थास्यामि प्रहरे तस्य ताताहमसिना युतः ॥ ६३ ॥ यद्ययैष्यति दुष्टः स तं विजित्य तदा ततः । सर्वं लात्वा च तं हारं पुनर्मातुः समर्प्य च ॥ ६४ ॥ पश्चात्पश्चिमयामिन्यां करिष्यामि प्रयाणकं । इत्युक्त्वा विरते पुत्रे पित्रोक्तमेवमस्तु भोः ॥ ६५ ॥ युग्मं ॥ अथो निशि निजावासे स्वयं कृत्वा स दीपकं । द्वारं दत्त्वा गृहीत्वासिं दीपच्छायांतरे स्थितः ॥ ६६ ॥ निशीथसमये यावत्प्रसुप्ते ऽखिलनागरे । वातायनाध्वना तत्र तावदेकः करोऽविशत् ॥ ६७ ॥ भ्रमंतं तं करं दृष्ट्वा कुमारोऽचिंतयद् हृदि । अहो चित्रं विना देहं यदेको दृश्यते करः ॥ ६८ ॥ तदेवेदं किमप्यत्र विधत्ते यदुपद्रवं । चिराद् दृष्टं कलं सर्व-मधुना तु भविष्यति ॥ ६९ ॥ कंकणप्रमुखैर्यश्च भूषितो भूरिभूषणैः । नूनं संभाव्यते नार्या-स्तदयं सरलः करः ॥ ७० ॥ तन्नूनं रमणी कापि भविष्यत्यत्र संस्थिता । देवमायावशान्नैति परं मे दृष्टिगोचरं ॥ ७१ ॥ असिघातेन चेदेनं छिंदेऽहं देवताकरं । यास्यत्येषा ततो घात—हतापि न चटिष्यति ॥ ७२ ॥ ध्यात्वेति सहसोत्प्लुत्य तमारुह्य करं क्षणात् । उभाभ्यां निजपाणिभ्यां दृढं जग्राह राजसूः ॥ ७३ ॥ ततो निःसृत्य भवना-द्वेगाद्व्योम्न्युद्ययौ करः । तत्र स्थितः कुमारोऽपि सर्ववीरशिरोमणिः

॥ ७४ ॥ कुमारे निर्भये तत्र व्योममार्गेण गच्छति । चकंपे स करः कामं वातोद्धूत इव ध्वजः ॥ ७५ ॥ करेणाच्छोटितोऽप्येष गाढं चक्रे करग्रहं । निर्विण्णः स ततो हस्तः समुत्प्लुत्य निपत्य च ॥ ७६ ॥

इतश्च प्रकटीभूतां पुरो दृष्ट्वा सुरांगनां । कुमारश्चिंतयामास सैवैषा कापि देवता ॥ ७७ ॥ तदेषा मां रुषा कापि गह्वरे क्षेप्स्यति ध्रुवं । इति मत्वा कुमारो द्राग् वज्रमुष्ट्या जघान तां ॥ ७८ ॥ आरटंती ततो दीन–वदना करुणस्वरं । मुहुर्मुहुर्वदंतीति मुंच मुंच कृपां कुरु ॥ ७९ ॥ मुक्ता करात्कुमारेण कारुण्यादाशु सा सुरी । तथा नष्टा यथा तस्या यांत्या मार्गोऽपि नेक्षितः ॥ ८० ॥ युग्मं ॥ निराधारः कुमारोऽथ पपात सहसांबरात् । फलभारातिनम्रस्य चूतवृक्षस्य मूर्द्धनि ॥ ८१ ॥ अनुभूय क्षणं मूर्छां मीलिताक्षो नृपात्मजः । वनवातेन शीतेन पुनः प्राप स चेतनां ॥ ८२ ॥ सहकारलताधार—पातादल्पव्यथान्वितः । कुमारश्चिंतयामास प्रदेशेऽहं क हाऽपतं ॥ ८३ ॥ शून्ये वसति वा शैले वृक्षाग्रे भूतलेऽथवा । पस्पर्शेति धिया रात्रि—तमःस्तोमे करेण सः ॥ ८४ ॥ शिखरं चूतवृक्षस्य ज्ञात्वा पक्वफलान्वितं । शाखा भारक्षमा नैषा हृदीति तेन चिंतितं ॥ ८५ ॥ क्षणेनोत्तीर्य शिखरा—न्मूलस्कंधमुपागतः । कुमारश्चिंतयामास निशामध्ये निशातधीः ॥ ८६ ॥

अहो कथमवस्थां कां संप्राप्तोऽपहृतस्तया । काहं संप्रति तं हारं कथं द्रक्ष्यामि लोचनैः ॥ ८७ ॥ प्रतिज्ञां पूरयिष्यामि कथमंबापुरः कृतां । असंप्राप्ते पुनर्हारे हा माता जीविता कथं ॥ ८८ ॥ देवीमृतेः कथं तातः प्राणान् धर्त्तुं सहिष्यते । तन्मे संप्रति वंशस्य संहारः समुपस्थितः ॥ ८९ ॥ इति ध्यायंस्तरुस्कंधे तस्थौ यावन्नृपात्मजः । तावच्छुश्राव मूलेऽस्य गाढं भूघर्षणारवं ॥ ९० ॥ सावधानदृशाऽपश्यत्कुमारो मूलसन्मुखं । आगच्छंतमजगर—मर्द्धग्रस्तांगिनं गुरुं ॥ ९१ ॥ कुमारश्चिंतयामास स्कंधेनास्फालनेच्छया । क्रूरः कवलितप्राणी जीवः कोऽपि समेत्ययं ॥ ९२ ॥ दीयते चेदजगर–ग्रस्तस्यैतस्य देहिनः । जीवितं तन्ममाप्यत्रा–गमनं सफलं भवेत् ॥ ९३ ॥ उत्ततार तरुस्कंधा–दवलंब्याथ साहसं । करुणापूर्णहृदयः प्रच्छन्नो निभृतक्रमः ॥ ९४ ॥ यावत्सोऽजगरो वेष्टं समं मूलेन दास्यति । कुमारस्तत्पुरस्ताव—स्थानमास्थाय संस्थितः ॥ ९५ ॥ दक्षत्वेन ततस्तस्य गृहीत्वौष्टयुगं समं । कराभ्यां पाटितं तेन तन्मुखं जीर्णवस्त्रवत् ॥ ९६ ॥ तन्मुखात्पतिता चैका युवती मंदचेतना । जल्पंतीति कुमारः स शरणं मे महाबलः ॥ ९७ ॥ दृष्ट्वा तामात्मनो नाम गृह्यमाणं तया स्त्रिया । श्रुत्वा च विस्मितश्चित्ते कुमारोऽतिशयेन सः ॥ ९८ ॥ मुक्त्वाथाजगरस्यास्य हस्ताभ्यामुभये दले । पश्यन्नासन्न एतस्याः सोऽपश्यन्मुख-

पंकजं ॥ ९९ ॥ ततो मलयसुंदर्याः सदृक्षां वीक्ष्य तां दशां । चमत्कृतः स चिक्षेप वातं वस्त्रेण शीतलं ॥ ६०० ॥ मूर्छापरवशा वाला सा तं श्लोकमचीकथत् । कुमारेण ततोऽज्ञायि सैषा मलयसुंदरी ॥ १ ॥ आदरेण ततस्तस्या देहसंवाहनापरे । कुमारे स्वस्थताभाजो दृष्टिरुन्मिलिताऽचिरात् ॥ २ ॥ कुमारः स्माह मुंचाशु निद्रामुद्रां मृगेक्षणे । गृहाण स्फुटचैतन्यं ममातिव्याकुलं मनः ॥ ३ ॥ उन्मील्य नयने सम्यगुत्थिता सा नृपात्मजा । वपुःसंवाहनासक्तं वीक्षांचक्रे नृपात्मजं ॥ ४ ॥ वपुः संवृत्य पश्यंती वाला तं स्निग्धया दृशा । उवाच जीविताहं तु कथं मे तेऽपि संगमः ॥ ५ ॥ कुमारः स्माह तन्वंगि प्रत्यासन्नापगाजले । प्रक्षालय वपुस्ताव–ज्जंवालाविलमात्मनः ॥ ६ ॥ पश्चादावां गदिष्यावो वृत्तांतं तं निजं निजं । इत्युत्थाप्य कुमारी सा नीता तेन नदीतटं ॥ ७ ॥ वपुः प्रक्षाल्य पीत्वा च जलं व्यावृत्य तावुभौ । उपविष्टौ पुनः स्वस्थौ तस्यैवाम्रतरोस्तले ॥ ८ ॥ ततो मलयसुंदर्या पृष्टः संतुष्टचेतसा । कुमारेणाखिलोऽभाणि स्ववृत्तांतोऽतिचित्रकृत ॥ ९ ॥ चमत्कारकरं श्रुत्वा वृत्तांतं तस्य विस्मिता । कुमारी कंपयामास स्वं मूर्द्धानं पुनः पुनः ॥ १० ॥ क्षिपंती स्नेहलां दृष्टिं कुमारे सा जगौ पुनः । अनुभूतमहो कष्टं त्वया सुंदर कीदृशं ॥ ११ ॥ कुमारः स्माह तन्वंगि स्ववार्त्तां ब्रूहि मूलतः । उदरेऽजगरस्यास्य कथं त्वं पतिता किल ॥ १२ ॥

तादृशं सौधमारुढा रक्ष्यमाणा महाभटैः । अनेन त्वमिहानीता मिलित्वा पाप्मना कथं ॥ १३ ॥ सा जगाद प्रवेशं न जानाम्यजगरोदरे । अन्यत्तत्त्वं शृणु त्वं मे भूत्वा वज्रसमोऽधुना ॥ १४ ॥ इतश्चाकर्णयामास कुमारो मर्त्यसंचरं । चित्ते च चिंतयामास रजन्यां कश्चरेदिह ॥ १५ ॥ चौरश्चेद् द्यूतकारो वा भवेज्जारोऽथ घातकृत् । तन्नारीसन्निधौ कर्त्तुं शक्यतेऽस्य न किंचन ॥ १६ ॥ भविष्यत्यथवा कोऽपि कुमार्याः पूर्वसंस्तुतः । स इमां वीक्ष्य मत्पार्श्वे करिष्यत्यसमंजसं ॥ १७ ॥ ध्यात्वेति गुटिकां केशपाशादाकृष्य लीलया । संघृष्याम्ररसेनास्याश्चित्रं भालेऽकरोदसौ ॥ १८ ॥ तत्प्रभावेण पुंरूपां दृष्ट्वा तामवदच्च सः । मन्निष्ठ्युतेन न स्पृष्टं यावच्चित्रमिदं तव ॥ १९ ॥ तावत्स्वाभाविकं रूपं भविष्यति न ते क्वचित् । चक्रे रूपपरावर्त्त आगच्छद्दुष्टशंकया ॥ २० ॥ यतो न ज्ञायते सम्यग् रजन्यास्तिमिरे सति । चौरो वान्यतरः कोऽप्यागच्छत्युन्मार्ग एव हि ॥ २१ ॥

इहागच्छत्वसावेक एवावां द्वौ जनो पुनः । पश्यत्वाशु विलक्षो वा यातु स्थानं यथेप्सितं ॥ २२ ॥ यावन्न ज्ञायते सम्यक् पर्यंतोऽस्य कथंचन । स्थातव्यं तावदावाभ्यां मौनेनात्रैव सुंदरि ॥ २३ ॥ मा कार्षीस्त्वं भयस्यापि लेशं लोलेक्षणे हृदि । वारयिष्यामि गच्छंतमपि वातं तवोपरि ॥ २४ ॥ एवं संस्थाप्य

तां बालां कुमारो यावदैक्षत । तावदेकामपश्यत्स्त्रीमागच्छंतीं द्रुतं द्रुतं ॥ २५ ॥ ततोऽभाणि कुमारेण स्वरेण मृदुना शुभे । कासि त्वमसहाया किं कंपः किं तव वर्ष्मणि ॥ २६ ॥ किं चास्ति भूप्रदेशेऽत्र नगरं किं नृपश्च कः । आवां वैदेशिकौ विद्वो न किंचिदुपिताविह ॥ २७ ॥ आश्वासिताथ मधुरालापेनानेन सा वशा । तयोः कुमारयोर्जातविश्वासैवमभाषत ॥ २८ ॥ हे क्षत्रियकुमारौ यत्पृष्टं तच्छृणुतं युवां । सैषा गोलानदी नाम्ना तटे यस्याः स्थितौ युवां ॥ २९ ॥ इतश्चंद्रावतीनाम समीपेऽस्ति महापुरी । श्रीवीरधवलो राजा राज्यं तस्य करोति च ॥ ३० ॥ कुमारश्चिंतयामास चित्रं चित्रमहो महत् । निपतन् निपतन् स्थाने क्वाहं निपतितोऽधुना ॥ ३१ ॥ तातेन प्रेषितो यत्र तदेव मम वांछितं । मया तन्मंक्षु संप्राप्तमहो पुण्यस्य वैभवं ॥ ३२ ॥ कुमार्या मिलितश्चाहं गतयापि यमानने । मयैषा जीविता चाहो अनुकूलो विधिर्मम ॥ ३३ ॥ कुमारः स्माह किं भद्रे बभूवास्य महीभुजः । बभाषे साथ तस्यासीत्कन्या मलयसुंदरी ॥ ३४ ॥ प्रारब्धो मंडपस्तस्या राज्ञा वर्यः स्वयंवरः । सर्वत्र प्रहिता दूता आह्वातुं राजनंदनान् ॥ ३५ ॥अतो दिनात्तृतीयेऽह्नि चतुर्दश्यां स्वयंवरः । राज्ञा हृष्टेन सर्वापि सामग्री प्रगुणीकृता ॥३६॥

इतश्चास्त्यत्र तन्मातुः सपत्नी कनकावती । तस्या मलयसुंदर्या द्वितीया जननीति सा ॥ ३७ ॥

तस्याः कनकवल्लयास्तु सोमाख्याहं महल्लिका । स्थानं सर्वरहस्यानां सर्वकार्यविधायिका ॥ ३८ ॥ सदा कनकवल्येषा वहंती द्वेषमुत्कटं । तस्याश्छिद्राणि पश्यंती कुमार्यास्तस्थुषी रुषा ॥ ३९ ॥ ऊचेऽथ नरनेपथ्यधारिण्या राजकन्यया । प्रद्वेषस्य निमित्तं किं गण्यते तत्र सुंदरि ॥ ४० ॥ कुमारोऽवक् सपत्नीनां तज्जातानां च सर्वदा । वैरं स्यादथ सा स्माह भविष्यति किमप्यदः ॥ ४१ ॥ एतावंति दिनान्यस्याः पश्यंत्याश्छिद्रसंततिं । तया निर्गमितानीह दुष्टया क्लिष्टचित्तया ॥ ४२ ॥ अतिक्रांतनिशायां तु तस्थुष्यां मयि सन्निधौ । तस्याः कंठेऽपतद्धारो लक्ष्मीपुंजाभिधः कुतः ॥ ४३ ॥ तद्वचोऽमृतवत् श्रुत्वा कुमार इव जीवितः । पुनर्जगाद हारः स पतितः स्थानकात्कुतः ॥ ४४ ॥

सा स्माहाकाशताऽकस्मात्पतितः किंतु वीक्षितः । अस्माभिः कोऽपि नाकाशे न च दिक्षु विदिक्ष्वपि ॥ ४५ ॥ कुमारोऽचिंतयत्तस्या व्यंतर्याः पार्श्वतोऽपतत् । अथ स्नेहेन केनापि तस्याः कंठे विमोचि वै ॥४६॥ इयत्कालमभूयस्य न शुद्धिः क्वापि केनचित् । एवंविधे महाकष्टे यदर्थं पतितोऽस्म्यहं ॥४७॥ यस्य स्वनाधिगम्यस्य लाभाशापि न चाभवत् । प्रवृत्तिस्तस्य हारस्य लब्धाहो पुण्यतोऽधुना ॥ ४८ ॥ तन्नूनं पूरयिष्यामि प्रतिज्ञां तां कृतां निजां । जीविष्यति कुलं सर्वमंबा हृष्टा भविष्यति ॥ ४९ ॥ लब्ध्वा कनक-

वत्सा तं किं किं सुंदरि निर्मितं । कुत्र गतश्च हारः स लक्ष्मीपुंजो मनोरमः ॥ ५० ॥ सोमा स्माह तया देव्या हृष्टयाऽभाणि सांप्रति । अहो अपूर्वमाश्चर्यं हले त्वं पश्य पश्य भोः ॥ ५१ ॥ पतितो यदिहस्थाने निःसंचारे शरीरिणां । कुतोऽप्यागत्य कंठे मे कुमार्या हार एष सः ॥ ५२ ॥ पश्य सर्वत्र कोऽप्यत्र वत्से तिष्ठति कुत्रचित् । इत्युक्ते कोऽपि पश्यंत्या मया दृष्टस्तयापि न ॥ ५३ ॥ क्षणं ध्यात्वा महाकूटं किमप्यूचेऽहमेतया । कथनीयो न कस्यापि हारलाभस्त्वयैष तु ॥ ५४ ॥ हारं संगोप्य भूपस्य पार्श्वे सागान्मया सह । याचित्वैकांतमेवं च पृथ्वीपालं व्यजिज्ञपत् ॥ ५५ ॥ पृथ्वीस्थानपुरे स्वामिन् सूरपालोऽस्ति भूपतिः । महाबलकुमारश्च तस्य रूपकलानिधिः ॥ ५६ ॥ अत्र प्रच्छन्नमायाति तस्यैकं मानुषं सदा । पार्श्वे मलयसुंदर्या वल्लभाया अतीव नः ॥ ५७ ॥ लक्ष्मीपुंजो महाहारः स्वामिंस्तेन जनेन सह । कुमार्या प्रेषितः सोऽद्य कुमारस्यास्य हेतवे ॥ ५८ ॥ संदिष्टं च तथा तस्मै कुमाराय त्वया पुरे । एतव्यं बलयुक्तेन स्वयंवरमिषाद् द्रुतं ॥ ५९ ॥ अन्येऽपि बहवो भूपा मिलिष्यंति तवात्र ते । मत्संकेतादिदं राज्यं गृह्णीया उद्वहेश्च मां ॥ ६० ॥ कुमारी सरला देव तेनैवं विप्रतारिता । राज्यलुब्धेन धूर्त्तेन गर्वितेन निजौजसा ॥६१॥ तत्किमपि मृगाक्षीणां चित्ते तुच्छधियामिह । स्वामिन्मधुरवाणीनां प्रस्फुरत्यसमंजसं ॥ ६२ ॥ यत्प्रभावेण

भर्तारं भ्रातरं पितरं तथा । पातयंति महाऽनर्थजाले ता हतबुद्धयः ॥ ६३ ॥ अनर्थोऽयं मया देव भविष्यन् कथितस्तव । हृदये रोचते यच्च कर्त्तव्यं तत्त्वयाधुना ॥ ६४ ॥ यदि न प्रत्ययोस्त्यत्र विषये तव मानसे । याचस्व तं महाहारं सुतां मलयसुंदरीं ॥ ६५ ॥

इत्यनेकमृपावाक्यैर्वैरिण्या पूर्वजन्मनः । तथा प्रकोपयांचक्रे तया राजातिदुष्टया ॥ ६६ ॥ यथा रोषांधलो जातो विसृज्यावां नरेश्वरः । देवीं चंपकमालां तामेकांते समजूहवत् ॥ ६७ ॥ सर्वं निवेदितं तस्याः सापि रोषारुणा जगौ । न चेद्दास्यति तं हारं पुत्री सत्यं तदाखिलं ॥ ६८ ॥ नृपेणाकारिता तत्र लं हारं याचिता सती । प्राक् संभ्रांता ततो भीता कुमारी मौनमाश्रिता ॥ ६९ ॥ पश्चात्संकल्प्य सा चित्ते ददावेवं नृपोत्तरं । मत्पार्श्वात्तात केनापि स हारोऽपहृतो ननु ॥ ७० ॥ कुपितेन ततो राज्ञा जगदे सा पुरो व्रज । हा पापेऽपसरावासे मा मुखं दर्शयात्मनः ॥ ७१ ॥ जननीसहितं तातं दृष्ट्वा सा कुपितं भृशं । ततो व्यावृत्य वेगेन संप्राप्ता निजमंदिरं ॥ ७२ ॥ अप्रियं स्निग्धपित्रोः किं कृतमज्ञातया मया । न स्मरामि हहा किंचिद्भविष्यामि कथं कथं ॥ ७३ ॥ हारे हृतेऽपि कथिते परस्मिन्नपि नेदृशः । पित्रोर्भवति मे कोपोऽपरं नावैमि किंचन ॥ ७४ ॥

इत्यादि चिंतयंती सा स्मरंत्यागोऽपि मूलतः । कुमारी दुःखिता तस्थौ विच्छायाननपंकजा ॥ ७५ ॥
नृपेणोचे स्फुटं देवि कुमार्या दुष्टचित्तया । लक्ष्मीपुंजाभिधो हारः कुमाराय समर्पितः ॥ ७६ ॥ ततः कनकवत्या यत्कथितं तन्मृषा न हि । मारयिष्यति मामेषा तैर्दुष्टैर्मिलिता घनैः ॥ ७७ ॥ एषा दुष्टावयोरिष्टाऽतीव स्वप्राणतोऽपि हि । संजाता वैरिणी कापि किं तु पुत्रीमिषादियं ॥ ७८ ॥ जीवयत्यनुरक्ता स्त्री विरक्ता मारयत्यपि । मित्रं करोत्यमित्रं द्रागमित्रं मित्रमीर्ष्यया ॥ ७९ ॥ ततो यावदियं दुष्टैर्न संगच्छेत वैरिभिः । तावत्सुखेन हन्येत विनष्टांगुलिवत्प्रिये ॥ ८० ॥ गमयित्वा त्रियामां तामतिकृच्छ्रेण भूभुजा । एवं प्रभातवेलायामादिष्टो दंडपाशिकः ॥ ८१ ॥ रे रे मम सुताप्येषा पापा मलयसुंदरी । हंतव्याशु त्वया लात्वा पृष्टव्यं न पुनः पुनः ॥ ८२ ॥

ज्ञात्वा व्यतिकरं चेमं समागत्याशु बुद्धिमान् । सुबुद्धिसचिवो रोषाद्दुष्प्रेक्ष्यं भूपमब्रवीत् ॥ ८३ ॥ देवेदं किं त्वयारब्धं दारुणं ह्यसमंजसं । इदानीं किं भवेत्पुत्री न सा मलयसुंदरी ॥ ८४ ॥ क स स्नेहो गतः किं वापराद्धं कन्ययानया । कार्यं सर्वमपि स्वामिन् कर्तुमालोच्य युज्यते ॥ ८५ ॥ विचारवर्जितं कार्यं क्रियमाणं न सुंदरं । पश्चात्तापो भवेत्पश्चात्स कोऽपि क्रियते यतः ॥ ८६ ॥ राजा कनकवत्युक्तं सर्व-

माख्याय तत्त्वतः । तथा संबोधितो मंत्री यथा तूष्णीं भयादभूत् ॥ ८७ ॥ राजादेशेन गत्वाथ तलारक्षो जनान्वितः । कन्यासौधस्थितां कन्यामब्रवीन्मंदवागिति ॥ ८८ ॥ आदिदेश वधं राजा कुमारि कुपितस्तव । आदेशं देहि मे हंतुं हतकर्मा करोमि किं ॥ ८९ ॥ सुदीनवदनाऽश्रांतपतद्बाष्पा जलार्द्रिता । किंकर्त्तव्यतया मूढा जगादेवं नृपांगजा ॥९०॥ अहो किमपि भूपस्य ज्ञायते कोपकारणं । स स्माहाहं न जानामि परमार्थं नृपात्मजे ॥ ९१ ॥ दध्यौ सा मानसे हा हा कोपो निष्कारणो मयि । तात जाने ततो भावी पश्चात्तापो महांस्तव ॥ ९२ ॥ अयं केन विसंवादः कृतस्तेऽकारणारिणा । तवाऽविचारकारित्वमियत्कालमभून्न हि ॥ ९३ ॥ निःसीमस्ते गतः कुत्रापत्यस्नेहः स तादृशः । अदर्शनेन मे येनानिष्टशंको क्षणादभूः ॥ ९४ ॥ अंब चंपकमौलेऽहं तादृक्स्नेहेन लालिता । युक्तायुक्तं तथा सर्वं ज्ञापिता हितया त्वया ॥ ९५ ॥ कथं त्वमपि संजाता पाषाणकठिनाधुना । कथमेको न सोढोऽयमपराधः कृतो यदि ॥ ९६ ॥ असमस्नेहयुक्तोऽपि बांधवो मलयाह्वयः । न कथं कथयत्येत्य वृत्तांतममुमादितः ॥ ९७ ॥

अहो ममोपरि स्नेहः सर्वेषां मूलतोऽत्रुटत् । सर्वे वक्षःकठोरास्तु जाता दोषेण केनचित् ॥ ९८ ॥ नूनं पुण्यानि मे मूलादपि छिन्नानि संप्रति । स्नेहलोऽपि यतो जातो जनोऽयं वैरिसन्निभः ॥ ९९ ॥ ततो

इत्यादि चिंतयंती सा सर्वत्यागोऽपि मूलतः । कुमारी दुःखिता तस्थौ विस्थायाननपंकजा ॥ ७५ ॥ नृपेणोचे स्फुटं देवि कुमार्या दुष्टचित्तया । लक्ष्मीपुंजाभिधो हारः कुमाराय समर्पितः ॥ ७६ ॥ ततः कनकवत्या यत्कथितं तन्मृपा न हि । मारयिष्यति मामेषा तैर्दुष्टैर्मिलिता घनैः ॥ ७७ ॥ एषा दुष्टावयोरिष्टाऽतीव स्वप्राणतोऽपि हि । संजाता वैरिणी कापि किं तु पुत्रीमिषादियं ॥ ७८ ॥ जीवयत्यनुरक्ता स्त्री विरक्ता मारयत्यपि । मित्रं करोत्यमित्रं द्रागमित्रं मित्रमीर्ष्यया ॥ ७९ ॥ ततो यावदियं दुष्टैर्न संगच्छेत वैरिभिः । तावत्सुखेन हन्येत विनष्टांगुलिवत्प्रिये ॥ ८० ॥ गमयित्वा त्रियामां तामतिकृच्छ्रेण भूभुजा । एवं प्रभातवेलायामादिष्टो दंडपाशिकः ॥ ८१ ॥ रे रे मम सुताप्येषा पापा मलयसुंदरी । हंतव्याशु त्वया लात्वा पृष्टव्यं न पुनः पुनः ॥ ८२ ॥

ज्ञात्वा व्यतिकरं चेमं समागत्याशु बुद्धिमान् । सुबुद्धिसचिवो रोषाद्दुष्प्रेक्ष्यं भूपमब्रवीत् ॥ ८३ ॥ देवेदं किं त्वयारब्धं दारुणं ह्यसमंजसं । इदानीं किं भवेत्पुत्री न सा मलयसुंदरी ॥ ८४ ॥ क स स्नेहो गतः किं वापराद्धं कन्ययानया । कार्यं सर्वमपि स्वामिन् कर्तुमालोच्य युज्यते ॥ ८५ ॥ विचारवर्जितं कार्यं क्रियमाणं न सुंदरं । पश्चात्तापो भवेत्पश्चात्स कोऽपि क्रियते यतः ॥ ८६ ॥ राजा कनकवत्युक्तं सर्व-

माऽयाय तत्ततः । तथा संबोधितो मंत्री यथा तूष्णीं भयादभूत् ॥ ८७ ॥ राजादेशेन गत्वाथ तलारक्षो जनान्वितः । कन्यासौधस्थितां कन्यामब्रवीन्मंदवागिति ॥ ८८ ॥ आदिदेश वधं राजा कुमारि कुपितस्तव । आदेशं देहि मे हंतुं हतकर्मा करोमि किं ॥ ८९ ॥ सुदीनवदनाऽश्रांतपतद्बाष्पा जलार्द्रिता । किंकर्त्तव्यतया मूढा जगादेवं नृपांगजा ॥९०॥ अहो किमपि भूपस्य ज्ञायते कोपकारणं । स स्माहाहं न जानामि परमार्थं नृपात्मजे ॥ ९१ ॥ दध्यौ सा मानसे हा हा कोपो निष्कारणो मयि । तात जाने ततो भावी पश्चात्तापो महांस्तव ॥ ९२ ॥ अयं केन विसंवादः कृतस्तेऽकारणारिणा । तवाऽविचारकारित्वमियत्कालमभून्न हि ॥ ९३ ॥ निःसीमस्ते गतः कुत्रापत्यस्नेहः स तादृशः । अदर्शनेन मे येनानिष्टशंको क्षणादभूः ॥ ९४ ॥ अंब चंपकमालेऽहं तादृक्स्नेहेन लालिता । युक्तायुक्तं तथा सर्वं ज्ञापिता हितया त्वया ॥ ९५ ॥ कथं त्वमपि संजाता पाषाणकठिनाधुना । कथमेको न सोढोऽयमपराधः कृतो यदि ॥ ९६ ॥ असमस्नेहयुक्तोऽपि बांधवो मलयाह्वयः । न कथं कथयत्येत्य वृत्तांतममुमादितः ॥ ९७ ॥

अहो ममोपरि स्नेहः सर्वेषां मूलतोऽत्रुटत् । सर्वे वक्षःकठोरास्तु जाता दोषेण केनचित् ॥ ९८ ॥ नूनं पुण्यानि मे मूलादपि छिन्नानि संप्रति । स्नेहलोऽपि यतो जातो जनोऽयं वैरिसन्निभः ॥ ९९ ॥ ततो

देवि स्फुटाह्नाय विवरं भूमि देहि मे । गत्वा रसातलं येन निर्वृताशु भवाम्यहं ॥ ७०० ॥ खिद्यमानेति सा दध्यौ तातं विज्ञपयाम्यहं । एकशो भवतात्पश्चाद्गाढ्यं यत्कर्मणा मम ॥ १ ॥ आकार्याथ द्रुतं वेगवतीं कार्यं निवेद्य च ॥ तया प्रस्थापिता राज्ञः पार्श्वे विज्ञापनाकृते ॥ २ ॥ गत्वा वेगवती वेगात्प्रजापालं व्यजिज्ञपत् । स्वामिन् विज्ञपयत्येवं त्वां सा मलयसुंदरी ॥ ३ ॥ अपराधोऽत्र युष्माकं पादपंकेरुहां कृतः । पुत्रीमिषेण वैरिण्या मया यः कोऽपि पापया ॥ ४ ॥ तं ब्रूहि म्रियमाणाया मम स्यायेन निर्वृतिः । प्रसद्य नाथ मे देहि यथेच्छं मरणं तथा ॥ ५ ॥ अन्यच्चाह यदि स्वामि संगच्छेऽहं तदेकशः । पित्रोः पादान्नमस्यामि दुर्लभानधुना स्वयं ॥ ६ ॥ नो चेदंत्यनमस्कारो वाच्यस्तातस्य मे त्वया । अंबायाः कनकवतीसंयुक्तायाश्च सांप्रतं ॥ ७ ॥

राजा जगाद कृत्वाऽपि कार्याण्यनुचितानि वै । पृच्छत्येषापराधं तु कुमारी मम पार्श्वतः ॥ ८ ॥ अहो गूढो ह्यभिप्रायो योषितां कपटान्यहो । अहो मधुरवाक्यानि परप्रत्यायनान्यहो ॥ ९ ॥ एतस्याः किं प्रणामेन सुधाभाया वचोभरैः । हृदये विषतुल्यायाः कुमार्याः कूटताजुषः ॥ १० ॥ ततोऽस्माकं मुखं नैव दर्शनीयमिहानया । यथेष्टं चास्तु मरणं तलारक्षे समीपगे ॥ ११ ॥ ततो वेगवती स्माह प्रसरच्छोकसंकुला ।

दक्षिणस्यां दिशि स्वामिन् गोलानद्या शुभे तटे ॥ १२ ॥ पातालमूलनामास्ति सुगंभीरोंधकूपकः । दत्वा झंपां कुमारी सा तत्र स्वं साधयिष्यति ॥ १३ ॥ युग्मं ॥ इत्युक्त्वा सा वेगवती रुदती बाष्पपूर्णदृक् । कथयामास वेगेन गत्वा राजसुतापुरः ॥ १४ ॥ राजांगजापि कठिनं मनः कृत्वा स्वकर्मणः । ददती दोषमालंब्य साहसं धीरिमान्विता ॥ १५ ॥ ध्यायंती हृदये पंचपरमेष्ठिनमस्क्रियां । प्रचचालांधकूपं तं कृत्वा मनसि साहसं ॥ १६ ॥ युग्मं ।

गच्छंती पादचारेण वेष्टिता राजपूरुषैः । साऽपतत्पुनरुत्तस्थौ प्रास्खलच्च पदे पदे ॥ १७ ॥ हा कुमारि किमस्माकं हृदयं न स्फुठेदिह । उड्डीयंते न किं प्राणा दुःखदग्धाः स्थिताः किमु ॥ १८ ॥ हा हा ते मधुरालापाः क्व सन्मानमपि क्व तत् । क्व मिथो मंत्रितं तच्च जल्पतीति सखीजने ॥ १९ ॥ स्वामिन्येषा तवावस्था किमस्माकं बभूव न । जीवंतः किं करिष्यामो निर्नाथाश्चाधुना वयं ॥ २० ॥ त्वां विना दुःखिता बाढं स्थास्यामः स्थानकांतरे । जल्पंतीति मुहुः कर्मकरलोके च गच्छति ॥ २१ ॥ हा हा महानराधीश त्वयाऽस्थाने कृता रुषः । अपराधेऽपि किं हंत स्वमपत्यं निहन्यते ॥ २२ ॥ यद्येष चिंतितोऽनर्थस्त्वया नाथ विचक्षण । कथं तदेष आरब्धः स्वयंवरणमंडपः ॥ २३ ॥ कन्योद्वाहोत्सुकानां तु प्राप्तानामिह भूभुजां ।

सर्वेषां सांप्रतं तेषां हा दास्यसि किमुत्तरं ॥ २४ ॥ हा हा चंपकमाले त्वं माताऽस्यास्तत्कथं बलात् । राजा न वारितो दुष्टाध्यवसायादपि त्वया ॥ २५ ॥ हा हा सुमानुषीरत्नशून्यं सर्वमभूज्जगत् । एतावतां गुणानां च क आवासो भविष्यति ॥ २६ ॥ विलपत्स्येवमत्यर्थं विज्ञपय्य नृपं बहु । विलक्षीभूय मिलिते समंतान्नगरीजने ॥ २७ ॥ राजांगजा विदारितचरणा कंटकादिभिः । क्षरद्रक्तांधकूपस्य तस्य कंठं समासदत् ॥ २८ ॥ एकादशभिः कुलकं ॥

महाबलकुमारः स सूरपालस्य नंदनः । सांप्रतं शरणं मेऽस्तु जल्पंतीति पुनः पुनः ॥ २९ ॥ हाहारवेषु लोकानामुत्थितेषु समंततः । अंधकूपे ददौ बाला झंपां शंपाभ्रमप्रदा ॥ ३० ॥ युग्मं ॥ ततो बाष्पजलैः सिंचन् भुवं निंदंश्च भूपतिं । उपालंभं ददौ दुष्टदैवस्य निखिलो जनः ॥ ३१ ॥ जगाम दुःखी व्यावृत्य स्वं स्वं स्थानं निशागमे । गत्वा भूमीपतेः सर्वं कथितं राजपूरुषैः ॥ ३२ ॥ युग्मं ॥ सकुटुंबोऽथ भूपालो मुदितोऽचिंतयत्तदा । निहता सुष्ठु सा दुष्टा जातं क्षेमं कुलस्य मे ॥ ३३ ॥ स्वयंवराहूतभूमीभृतां सांप्रतमित्यहं । ज्ञापयामि मृता रोगवशान्मलयसुंदरी ॥ ३४ ॥ आगंतव्यं न युष्माभिरत्र कार्येऽधुना ततः । किंतु पृच्छामि कनकवतीमप्युपकारिणीं ॥ ३५ ॥ ततो यावद्ययौ राजा सुबुद्धिसचिवान्वितः । तस्या वासगृहं

चरित्रं

तावद् द्वारं दत्तं ददर्श सः ॥ ३६ ॥

कुंचिकाविवरेणाथ यावदैवक्षत भूपतिः । दीपोद्योतेन कनकवतीं तावद्व्यलोकत ॥ ३७ ॥ तां कृतोद्भटशृंगारां प्रमोदेन करस्थितेः । जल्पंतीमिति हारस्य लक्ष्मीपुंजस्य सन्मुखं ॥ ३८ ॥ युग्मं ॥ हंहो हारवर त्वं मे हस्ते पुण्यैश्चिरादृतः । सर्वं तव प्रसादेन वांछितं साधितं मया ॥ ३९ ॥ त्वामत्र गोपयित्वा तु कोपयित्वा नराधिपं । मयाद्य घातिता कन्या सा जन्मांतरवैरिणी ॥ ४० ॥ ततश्चिंतामणिकल्प हार त्वं मम दुर्लभः । अतः प्रभृति राजेव प्रसन्नो भव सर्वदा ॥ ४१ ॥ तत् श्रुत्वा हारमालोक्य दुःखार्त्तो भूपतिर्जगौ । हा हा पापे त्वया कूटं विधाय छलितोऽस्म्यहं ॥ ४२ ॥ पुत्रीपार्श्वात्स्वयं हारं गृहीत्वा कथितं मम । महाबलकुमाराय हारः प्रादायि कन्यया ॥ ४३ ॥ सकुटुंबस्त्वया दक्षः पापेऽहं विप्रतारितः । निर्दोषा घातिता पुत्री जीवितं मम संहृतं ॥ ४४ ॥ हाहा दुष्टेऽपराद्धं किं मम पुत्र्याऽनया तव । इयत्कालं न दूनं यत् कीटिकामात्रमप्यहो ॥ ४५ ॥ द्वाभ्यामपि कराभ्यां द्वौ कपाटौ ताडयन् दृढं । पूत्कुर्वन्नुच्चकैर्हा हा वंचितोऽस्मीति च ब्रुवन् ॥ ४६ ॥ प्राप मूर्छामतुच्छां स भूपालो दुःखविह्वलः । सर्वोऽपि मिलितो लोकः सहसा सर्वतोऽपि च ॥ ४७ ॥ युग्मं ॥

सुसंभ्रांतो जनो यावत् हा हा किं किमिति ब्रुवन् । शीतलैर्जलवाताद्यैरुपचारपरोऽभवत् ॥ ४८ ॥ तावद्गवाक्षमार्गेण तया मरणभीतया । देव्या कनकवल्या द्राक् दत्ता झंपा मयापि च ॥ ४९ ॥ अहं मत्स्वामिनी चापि कापि शून्यगृहे स्थिते । अन्योऽन्यं लोकसंलापान् श्रुतवत्याविति क्षणं ॥ ५० ॥ राजा कथमपि प्राप्य चैतन्यं पूच्चकार सः । ततश्चंपकमालापि तत्रायाता भयाकुला ॥ ५१ ॥ सा पप्रच्छ किमेतद्भो अस्माकं प्राणपातनं । मुंचन्नश्रूण्यथो मंत्री सुबुद्धिः स्फुटमभ्यधात् ॥ ५२ ॥ कूटं कनकवल्यास्तथा दृष्टं श्रुतं यथा । तथा मंत्रिमुखात् श्रुत्वा सर्वं शोकभरार्दिता ॥ ५३ ॥ देवी चंपकमालाथ कंठमालंब्य भूपतेः । महावेदनयाक्रांता पूच्चकार गुरुस्वरं ॥ ५४ ॥ युग्मं ॥ ततः कथंचित्संबोध्य भणितौ तौ च मंत्रिणा । विलोकयतमद्यापि कूपे तत्र कुमारिकां ॥ ५५ ॥ लभ्यते यदि जीवंती क्षिप्तापि प्राणसंशये । कुमारी सा ततोऽस्माकं पुण्यलेशोऽपि विद्यते ॥ ५६ ॥ तत्कालं स ततो गत्वा नृपस्तत्रांधकूपके । मध्ये निक्षिप्य पुरुषान् वीक्षयामास तां सुतां ॥ ५७ ॥ पश्यद्भिरपि तैस्तत्रांधकूपेऽतिभयानके । ददृशे कापि नो तस्याः कुमार्याश्चिह्नमप्यहो ॥ ५८ ॥ हताशोऽथ स्फुरत्कोपो विलक्षवदनो नृपः । प्रासादं पुनरागत्य मत्स्वामिन्या गृहं ययौ ॥ ५९ ॥ उद्घाट्याथ गृहद्वारमदृष्ट्वांतश्च तां नृपः । जाज्वल्यमानकोपाग्निर्वक्तुमेवं

प्रचक्रमे ॥ ६० ॥ नष्टा सा वैरिणी कुत्र रे रे पश्यत पश्यत । तस्याः पदं निरीक्षध्वं गता वातायनेन किं ॥ ६१ ॥ अथ सर्वस्वमेतस्या लुंटितं राजपुरुषैः । राजादेशेन चाग्राहि परिवारजनोऽखिलः ॥ ६२ ॥ निर्दोषायास्तनूजाया निग्रहेणानुमूर्छितः । पश्चात्तापेन भूपालः सार्द्धं चंपकमालया ॥ ६३ ॥ जीविष्यति त्रियामायाः पश्चाद्यामयुगं यदि । प्रातश्चिताप्रवेशेन मरिष्यति तदा ध्रुवं ॥ ६४ ॥ पंचदशभिरर्थैकुलकं ॥

आवां दृष्ट्वा विलोक्याथ भ्रमतो राजपूरुषान् । ऊचे कनकवत्याहमेवमातंकयुक्तया ॥ ६५ ॥ न सुंदरमिदं तावदेकत्रावामुभे अपि । यदिस्थिते यदि केनापि ज्ञाते वद्धे तदा ध्रुवं ॥ ६६ ॥ इत्युक्त्वा सारमादाय लक्ष्मीपुंजादिकं निजं । वेश्यायाः स्वस्निग्धसख्याः सा मगधाया गृहं गता ॥ ६७ ॥ अहमेकाकिनी तत्र स्थाने तु स्थातुमक्षमा । कांदिशिका विनिःसृत्य वेगेनात्र समागता ॥ ६८ ॥ यन्मे पृष्टं कुमारौ भो युवाभ्यां भयकारणं । तन्मया कथितं सर्वमपि दुःखौघपूर्णया ॥ ६९ ॥ कुमारोऽथावदद्दुष्टयोषितां चरितान्यहो । विनाशितं सुदुष्प्रापं कन्यारत्नं कथं तया ॥ ७० ॥ जीवितव्यस्य संदेहे स्थापितोऽपि नरेश्वरः । कृताः प्रजाश्च निर्नाथा इदं राज्यं च कंपितं ॥ ७१ ॥ आत्मनः सर्वनाशश्च देशत्यागश्च निर्मितः । अकीर्त्तिर्वर्द्धिता लोके तुच्छा धीर्योषितामहो ॥ ७२ ॥ सोमा स्त्री सावदत्तावद्विभातैषा विभावरी । तदेश्यति

चरित्रं

॥ ६३ ॥

कुतोऽप्यत्र कोऽपि भूपालपूरुषः ॥ ७३ ॥ गच्छाम्यहं पुरः क्वापि जल्पंतीति चचाल सा । कुमारौ तौ च पश्यंती प्रसन्नस्निग्धया दृशा ॥ ७४ ॥ कुमारोऽथ कुमारीं तां प्रत्युवाचावयोस्तया । तद्दिने क्रुद्धयाद्यैव वैरमेवं विशोधितं ॥ ७५ ॥ अस्याः कनकवत्यास्तु दास्या एवेति मूलतः । ज्ञातः सर्वोऽपि वृत्तांतस्तावको राजनंदने ॥ ७६ ॥ अहो स्वल्पेन कालेन भुक्तं दुःखं त्वया महत् । ईदृग्दुःखैर्न यद्भिन्नमहो ते हृदयं दृढं ॥ ७७ ॥ अंधकूपस्य मध्ये त्वं निपातगतचेतना । नूनमेतेन गलिताऽजगरेण दुरात्मना ॥ ७८ ॥ कूपोऽपि सोऽत्र कुत्रापि प्रत्यासन्नो भविष्यति । तस्मात्केनापि मार्गेणाऽजगरोऽयं विनिःसृतः ॥ ७९ ॥

आम्रस्कंधेन संश्लेषं दातुमेषोऽत्र चागतः । कराभ्यां च मया धृत्वा निर्विलंबं विदारितः ॥ ८० ॥ अस्य मध्यात्कुमारो त्वं पतिता मिलिता च मे । पुण्यैरतर्कितो जात आवयोरेष संगमः ॥ ८१ ॥ दृष्ट्वा साजगरं भिन्नदेहं कंपसमन्विता । भणिता भूपपुत्रेण कार्या शंका न हि त्वया ॥ ८२ ॥ आवां यत्संगतावेवमीदृग्दुःखार्दितावपि । तन्नूनमनुकूलोऽयं आवयोर्भगवान् विधिः ॥ ८३ ॥ ततस्तौ द्वावपि श्लोकं तं पठंतौ पुनः पुनः । गत्वा गोलानदीतीरे चक्रतुर्मुखधावनं ॥ ८४ ॥ तस्यैवाम्रतरोः पक्वफलान्यास्वाद्य तावुभौ । नदीतीरे स्थितं भट्टारिकायाभवनं गतौ ॥ ८५ ॥ अद्राष्टां तत्र तौ काष्ठफालीयुग्मं यदंतरा ।

देवी चंपकमाला सा तदा लब्धा महीभुजा ॥ ८६ ॥ तदंतः शुषिरं दृष्ट्वा शिरः कंपयता भृशं । महाबलेन किमपि विचिंत्य हृदि भाषितं ॥ ८७ ॥ इदानीं त्रीणि कार्याणि कर्त्तव्यानि मया शुभे । तावदेकं कुटुंबं ते त्रातव्यं मरणोद्यतं ॥ ८८ ॥ द्वितीयं तु स्वमुद्राख्या पितृदत्ता मया ननु । तृतीयं हारदानेन देयं मात्रे तु जीवितं ॥ ८९ ॥ लक्ष्मीपुंजे गते हारे पद्मावत्याः पुरो यका । स्वयं कृता प्रतिज्ञा सा पूरणीया मया खलु ॥ ९० ॥ तद्गच्छ त्वं पुरस्यांतर्मगधागणिकागृहे । अनेनैव नृरूपेण गंतव्यं दिवसात्यये ॥ ९१ ॥ सा कनकवती तत्र दृष्टव्या हारसंयुता । वर्त्तितव्यं तथा तत्र हारश्चटति मे यथा ॥ ९२ ॥ गत्वाहं तु नृपं पामि प्रविशंतं चितानले । केनापि धीप्रयोगेण देवीयुक्तं सुदुःखितं ॥ ९३ ॥ देहि मह्यं कुमारि त्वं मुद्रारत्नमिदं निजं । मुद्राचोर इति ज्ञात्वाऽन्यथा त्वं रुत्स्यसे भटैः ॥ ९४ ॥ नामांकितं तदादाय मुद्रारत्नं कचेषु सः । क्षिप्त्वा चाह त्वया भद्रे भ्रमणीयमलक्ष्यया ॥ ९५ ॥ अद्य रात्रिः समग्रापि वेश्यावासे प्रयास्यति । पश्यंत्याः कनकवतीं हारं तं च कुमारि ते ॥ ९६ ॥ गमयित्वा दिनं पश्चात्सायं पुनरिहैव हि । आगंतव्यं त्वया येनावयोर्भवति संगमः ॥ ९७ ॥ यतो विधाय कार्याणि चिंतितानि यथा यथा । कल्ये सायं समेष्येऽहमपि भट्टारिकागृहे ॥ ९८ ॥ कुमारकथितं चित्ते धृत्वा सा प्रस्थिता ततः । चंद्राव-

त्रीपुरीमध्यं प्राप पुंरूपधारिणी ॥९९॥ विचिंत्यागामिकार्याणि यथाकार्याणि चेतसि। पश्चान्महाबलोऽप्येष प्रतस्थे नगरींप्रति ॥ ८०० ॥

अत्रान्ये बहवो भूपा मिलिष्यंति ससेवकाः। एकस्य पांथतुल्यस्य प्रवेशोऽपि कथं मम ॥ १ ॥ ततस्तथा मया कार्यं यथा भूपेषु सत्स्वपि। दत्ते कन्यामिमां मह्यं पिताऽसाविति चिंतयन् ॥ २ ॥ कृतनैमित्तिकाऽकल्पो यावत्कतिपदान्यगात्। वृक्षमूले गजं बद्धं तावद्देक्षत भूपभूः ॥ ३ ॥ त्रिभिर्विशेषकं ॥ निगाल्यमानमालोक्य पुरीषं तस्य दंतिनः। तेन पृष्टाः कुमारेण ते जना इत्यचीकथन् ॥ ४ ॥ अत्रागतेन भूपस्य पुत्रेण ह्यस्तने दिने। वेष्टितेक्षुलता कंठादुत्तार्य स्वर्णशृंखलां ॥ ५ ॥ क्रीडयोल्लालिता हस्तिसमीपे सेक्षुयष्टिका। निपतंती करग्राहं मुखे क्षिप्ताशु दंतिना ॥ ६ ॥ राज्ञोऽग्रे कथितं मंत्रैर्निष्कासयितुमक्षमैः। राजादिष्टा वयं तेन गालयामः पुरीषकं ॥७॥ कदाप्येकमुभे त्रीणि चत्वार्यपि कदाचन। लभ्यंते तस्य खंडानि हस्तिविट् तेन गाल्यते ॥ ८ ॥ महाबलेन तन्मुद्रारत्नमादाय केशतः। प्रच्छन्नं चिक्षिपे तत्र करिणो घासपूलके ॥ ९ ॥ तं घासपूलकं यावज्जग्रसे स मतंगजः। तावत्तत्र कुमारोऽपि स्थित्वाऽचालीत्ततोऽग्रतः ॥ १० ॥ गच्छताथ कुमारेण दृष्टो गोलानदीतटे। मिलितः प्रचुरो लोकः कुर्वन् कोलाहलं

भृशं ॥ ११ ॥ स दध्यौ नूनमेतत्तद्यदर्थं चलितोऽस्म्यहं । उद्गच्छंती चितावह्नेर्धूमलेखा यदीक्ष्यते ॥ १२ ॥ ऊर्ध्वहस्तोऽथ वेगेन स नैमित्तिकवेषभाक् । दधावेऽभिचिताधूमं वदन्नेवं मुहुर्मुहुः ॥ १३ ॥ मुधा मा साहसं कार्षीर्भूपतेऽपत्यवत्सल । नूनं जीवति ते पुत्रीरत्नं मलयसुंदरी ॥ १४ ॥

तस्येदं वचनं श्रुत्वा कर्णयोरमृतोपमं । मुंचन्नश्रूणि लोकोऽथ दधावे तं नरंप्रति ॥ १५ ॥ लोको जगाद शीघ्रं भो आगच्छागच्छ सन्नर । उत्तार्यतां त्रिसंध्यं सजिह्वाया लवणं तव ॥ १६ ॥ जीवंती विद्यते कापि किं सा भूपालनंदना । दृक्ष्यते किं कदास्माकं नेत्रैरेभिर्वदाशु भोः ॥ १७ ॥ उच्चे नैमित्तिकः सोऽपि जलमानीय भो जनाः । विध्यापयत वेगेन चिताग्निं प्रथमोत्थितं ॥ १८ ॥ विध्यापिते चितावह्नौ राजा देवीसमन्वितः । बाह्याभ्यंतरतापेन संतप्तोऽपि बहिष्कृतः ॥ १९ ॥ नैमित्तिको बभाषे च राजन् मा भूस्त्वमाकुलः । सा जीवंत्यस्ति कुत्रापि पुत्री मलयसुंदरी ॥ २० ॥ निमित्तस्य बलेनाहं जानामि नरनायक । तस्येत्युक्तिसुधासेकान्निर्वृतो भूपतिर्जगौ ॥ २१ ॥ युग्मं ॥ अहो नैमित्तिकैतावान् पुण्यभारोऽस्ति मे न हि । जीवंतीं स्वसुतां येन कापि दृक्ष्याम्यहं पुनः ॥ २२ ॥ तादृक्षे यदि कूपे सा कृतांतोदरसन्निभे । पतितापि मृता नैव न कोऽपि म्रियते ततः ॥ २३ ॥ किंच पश्चान्मया पश्चात्तापसंतप्तचेतसा । अवटे तत्र नो

लब्धा बहुधापि विलोकिता ॥ २४ ॥ कुमारी तन्मृता नूनं जग्धा जीवेन केनचित् । अतो मम सुखेनाभो
मरणं किं न गच्छथ ॥ २५ ॥ नैमित्तिकस्ततः स्माह शृणु राजन् वचो मम । अद्येयं वर्त्तते कृष्णा द्वादशी-
तिथिरुत्तमा ॥ २६ ॥ अतो दिनात्तृतीयेऽह्नि गते च प्रहरद्वये । मिलितेषु समग्रेषु लोकेषु क्षितिपेषु च
॥ २७ ॥ आहूतेषु कुमारेषु मंडपेऽत्र स्वयंवरे । यथास्थानोपविष्टेषु पाणिग्रहणवांछया ॥ २८ ॥ कुतोऽपि
सहसा तस्याः कुमार्या दर्शनं तव । वस्त्रालंकारयुक्ताया भविष्यत्यविचिंतितं ॥ २९ ॥ त्रिभिर्विशेषकं ॥ य-
थेच्छं सन्निधातव्यः स्वयंवरणमंडपः । आगच्छंतो नृपा नैव वारणीयाः प्रभो त्वया ॥ ३० ॥ अत्रार्थे यदि
ते चेतः संदिग्धं क्षितिवासव । ज्ञानदृष्ट्योपलब्धांस्तच्छृण्वेतान् प्रत्ययानिह ॥ ३१ ॥ नामांकितं कुमार्या-
श्चन्मुद्रारत्नं कुतोऽपि ते । आगच्छति करे कल्ये सत्यं तन्मम भाषितं ॥ ३२ ॥ तथा चतुर्दशीघस्रे प्रत्यूषे
नगराद्बहिः । पूर्वप्रतोलिकापार्श्वे परीक्षार्थं महीभुजां ॥ ३३ ॥ षड्हस्तप्रमितं स्तंभं नानावर्णकचित्रितं ।
कुतोऽप्यानीय मोक्ष्यंति तव गोत्राधिदेवताः ॥ ३४ ॥ युग्मं ॥ स च देव त्वया स्थाप्यः स्वयंवरणमंडपे ।
वज्रसाराभिधं यच्च कोदंडं तेऽस्ति वेश्मनि ॥ ३५ ॥ पूर्वजानां च तच्चापं कृत्वा नाराचसंयुतं । पूजयित्वा
महाभक्त्या स्थाप्यं स्तंभस्य सन्निधौ ॥ ३६ ॥ तत्कोतुकं समारे ...

स ज्ञेयः कन्यायास्ते वरो ननु ॥ ३७ ॥ स्तंभस्यास्ति पुनस्तस्य विशिष्टः पूजनक्रमः । निमित्तेन मया ज्ञातमिदं सर्वमपि प्रभो ॥ ३८ ॥ इमानि यदि चिह्नानि न मिलंति सुतापि न । ततस्तिष्ठंति काष्ठानि स्वायत्तान्यशिना समं ॥ ३९ ॥ तस्यैवं वचनं श्रुत्वा जनः सर्वः प्रमोदभाक् । निमित्तज्ञनरस्येति चक्रे संस्तवनं तदा ॥ ४० ॥ पुण्यैरस्माकमल त्वं समायातोऽसि सन्नर । जगतः सकलस्याप्युपकारोऽद्य त्वया कृतः ॥ ४१ ॥ फणींद्रकूर्मराजाभ्यां वाङ्मात्रेण धृता मही । नूनं सत्पुरुषैर्युष्मादृशैः सत्पुरुषोऽधृता ॥४२॥ अहो सद्ज्ञानलक्ष्मीस्ते परोपकृतिबंधुरा । तत्त्वं नंद चिरं जीव निस्सीमगुणसेवधे ॥४३॥ तस्योपरि जनः सर्वो हर्षोत्कर्षवशात्तदा । वस्त्राण्युत्तारयामास सर्वाण्याभरणानि च ॥ ४४ ॥ उत्क्षिप्ताभरणो लोकः संयोज्य करकुड्मलो । जगादेति गृहाणेदं प्रसीदास्मासु सन्मते ॥ ४५ ॥ दीयते यदि सर्वस्वं हर्षेदानेऽत्र तेऽधुना । तथाप्यस्योपकारस्य पुरः स्वल्पं महामते ॥ ४६ ॥ तेनोक्तं ननु युष्माकं मया ग्राह्यं न किंचन । यदि गृह्णे ततः कीदृगुपकारो भवेन्मम ॥ ४७ ॥

अथाह नृपतिस्तस्य स्तंभस्य पुरुषोत्तम । यः कोऽपि पूजनविधिः स कर्त्तव्यस्त्वयैव हि ॥ ४८ ॥ बबंधे शकुनग्रंथिस्तथेति भणता पुनः । पप्रच्छेऽसौ पुनर्ज्ञानी राज्ञेति मुदितात्मना ॥ ४९ ॥ यथैतावत्त्वया

ज्ञानिन् सर्वमेतन्निवेदितं । पुरो ब्रूहि तथा को मे परिणेष्यति कन्यकां ॥ ५० ॥ तेनोचे पृथिवीस्थाने सूरपालस्य नंदनः । महाबलकुमारस्ते परिणेष्यति नंदनां ॥ ५१ ॥ अनुरूपतया लोके प्रशंसामुखरे सति । एकेन वंदिना पेठे तत्र कालनिवेदिना ॥ ५२॥ संत्यक्तपूर्वकाष्ठोऽयं दुरालोकः स्वतेजसा । सूरः प्रवर्त्तते देव लोकानां त्वमिवोपरि ॥ ५३ ॥ विज्ञप्तो मंत्रिणा राजा प्रसीद परमेश्वर । गम्यते नगरीमध्ये मध्याह्नसमयोऽभवत् ॥ ५४ ॥ ज्ञानिनाथ समं राजा चचाल स्वगृहंप्रति । प्रसरत्यतुले तूर्यरवे लोकप्रमोदिनि ॥ ५५ ॥ पौराणां नयनानंदं कुर्वन् शृण्वंस्तथाशिषः । ददानो दानमर्थिभ्यो भूपालः प्राप मंदिरं ॥ ५६ ॥ प्रथमं ज्ञानिना तेन कारयित्वा ततः स्वयं । स्नानाशनादिकां चक्रे भूपतिः सकलां क्रियां ॥ ५७ ॥ तेनेव सह राज्ञाथ कुर्वता संकथादिकं । दिनार्द्धं गमितं किंचिच्छयानेन निशापि च ॥ ५८ ॥ समादिष्टास्ततः कुंभैर्विष्टागालनकर्मणि । प्रातरागत्य सर्वेऽपि भूपमेवं व्यजिज्ञपन् ॥ ५९ ॥

न जानीमो वयं किंचिदस्माभिः कुंभिनो मलं । गालयद्भिरिदं लब्धं मुद्रारत्नं प्रभोऽधुना ॥ ६० ॥ तैरित्युक्त्वार्पिते हस्ते मुद्रारत्ने नरेश्वरः । सुतानामांकितं दृष्ट्वा तच्छिरोऽकंपयन्मुहुः ॥ ६१ ॥ पश्यत्स्वभिः सर्व राज्ञि ज्ञानिना जगदे वचः । ज्ञानदृष्टं कदाप्येतन्नान्यथा भवति प्रभो ॥ ६२ ॥ राजा जगाद दुःखा-

र्त्कुमारीपार्श्वतः कथं । मत्तेभस्यास्य जठरे गतमेतन्नरोत्तम ॥ ६३ ॥ ज्ञानी जगाद नो सत्यं ज्ञायते देव किंचन । प्रभावः कुलदेवीनां किंतु संभाव्यतेऽप्ययं ॥ ६४ ॥ प्रत्यये मिलिते तस्मिन् राजा हर्षवशंवदः । विशेषात्कारयामास कन्याविवाहसज्जतां ॥ ६५ ॥ विशालः कारितो राज्ञा स्वयंवरणमंडपः । आवासा भूभुजां योग्याः सर्वेऽपि प्रगुणीकृताः ॥ ६६ ॥ जनोऽवोचदहो चित्रं वीक्षध्वं कन्यकां विना । देवेनात्र समारेभे यद्विवाहमहोत्सवः ॥ ६७ ॥ न भविष्यति चेत्कन्यालाभस्तर्किं गदिष्यति । आयातानामयं राज्ञां लाघवं भवितास्य तु ॥ ६८ ॥ ते सर्वे मिलिता भूपा विलक्षीभूतचेतसः । क्रुद्धा उत्थापयिष्यंति किमप्यत्रासमंजसं ॥ ६९ ॥ इदं युक्तमयुक्तं वाऽधुना न ज्ञायते किल । कार्ये निष्पद्यमाने तु ज्ञास्यते भविता यथा ॥७०॥ अथ सायं समाजग्मू राजानः सपरिच्छदाः । आवासितानि वासेषु दर्शितेषु पृथक् पृथक् ॥ ७१ ॥ नैमित्तिको नृपं प्रोचे मंत्रो मेऽस्त्यर्द्धसाधितः । न चेदं साधयाम्यद्य ततोऽसौ नैव सिध्यति ॥ ७२ ॥ तन्मामद्यतनीमेकां तमिस्त्रां विसृज प्रभो । नियमेनागमिष्यामि निशांते पुनरप्यहं ॥ ७३ ॥ सोऽनुज्ञातस्ततो राज्ञा मंत्रसाधनहेतवे । यत्किंचिद्द्रविणं युज्येत्तद्गृहाणेति जल्पता ॥ ७४ ॥ कियद्द्रव्यमुपादाय नत्वा तं स विनिर्ययौ । राजापि गमयामास तां निशां चिंतया भृशं ॥ ७५ ॥ प्रातरुद्घाट्यमानेषु गोपुरेषु स-

मंततः । स पुनः प्राणमद्भूपं समागत्य निमित्तवित् ॥ ७६ ॥ पृष्टस्तुष्टेन भूपेन सन्मान्य स पुमानिति । सुखेन मंत्रसंसिद्धिः संजाता तव सत्तम ॥ ७७ ॥

स स्माहाभूत्कियन्माला सिद्धिर्मंत्रस्य मे नृप । दुःसाध्यस्य कियन्मात्रा भविष्यत्यधुना पुनः ॥ ७८ ॥ किंतु स्मरंस्तवादेशं तदैवाहमिहागमं । स्तंभार्चनविधिं कृत्वा पुनर्यास्यामि वेगतः ॥ ७९ ॥ अहो परोपकार्येण मंत्रं मुक्त्वार्द्धसाधितं । उक्तायामेव वेलायां मत्कार्येण समागतः ॥ ८० ॥ ईदृशा एव जायंते नराः स्वीकृतकारिणः । इति ध्यायन्नृपस्तस्थौ यावत्स्वस्थमतिस्तदा ॥ ८१ ॥ स्तंभस्य शुद्धये तावत्प्रेषितो योऽभवत्पुमान् । समागत्य स भूपालं दत्तकर्णं व्यजिज्ञपत् ॥ ८२ ॥ युष्मदादेशतो गत्वा देव गोपुरतो बहिः । यावदीक्षांबभूवाहं तत्समीपमितस्ततः ॥ ८३ ॥ प्रतोलीवामतस्तावद्दृष्टः प्राकारकोणके । विचित्रचित्रसंयुक्तः स्तंभ एको मया महान् ॥ ८४ ॥ श्रुत्वेति ज्ञानिनं शंसन् सहैवादाय तं नरं । ययौ तत्र महीपालः स स्तंभो यत्र विद्यते ॥ ८५ ॥ चित्रीयमाणचित्तोऽथ विस्फारितविलोचनः । यावद्भूपोऽपि लोकोऽपि स्तंभं तं पूजयिष्यति ॥ ८६ ॥ तावन्नैमित्तिकेनोचे स्तंभेऽस्मिन् केनचिन्न हि । लागनीयः करो येन कुप्यंति कुलदेवताः ॥ ८७ ॥ आनाय्य ज्ञानिना सर्वं ततः पुष्पादिकं स्वयं । पूजाविधिः समारेभेस्तंभ-

स्यानेकभंगिभिः ॥ ८८ ॥ उपविश्य पुरस्तस्य कृत्वा पद्मासनं च सः । ध्यानस्थ इव वक्त्रेण चक्रे श्रीकर-
भापणं ॥ ८९ ॥ कारित्ते प्रेक्षणे तत्र मिलिते च पुरीजने । सार्द्धयामे गतेऽथाह्न आदिष्टास्तेन ये नराः
॥ ९० ॥ शुचीभूता दृढस्कंधाः पुष्पमालालिमालिताः । उत्पाट्य ते महास्तंभं प्रचेलुर्नगरींप्रति ॥ ९१ ॥
॥ युग्मं ॥ नरेंद्रे सह लोकेन पादचारेण गच्छति । नाटके क्रियमाणे च बंदिवृंदे पठत्यपि ॥ ९२ ॥
नागरैः क्रियमाणेपु मंगलेपु पदे पदे । महेन महता निन्ये स तैः स्तंभः स्वयंवरे ॥ ९३ ॥ युग्मं ॥

आनाय्य ज्ञानिना तेन पड्हस्तप्रमिता शिला । निक्षेपिता भुवो मध्ये द्वौ हस्तौ तत्र मंडपे ॥९४॥
ऊर्ध्वीकृतो महास्तंभः स तेन ज्ञानिना स्वयं । तस्याः पार्श्वेन संयोज्य स्वप्रयोगेण यंत्रितः ॥९५॥ त-
च्चापं वज्रसाराख्यं पश्चिमेन शिलामिमां । तत्र संस्थापितं दूरे नाराचेन समन्वितं ॥ ९६ ॥ सिंहासनानि
राज्ञां तां दक्षिणेनोत्तरेण च । संस्थापितानि तेनेह परिवारासनानि च ॥ ९७ ॥ गंधर्वैश्च समारेभे गां-
धर्वं मधुरस्वरैः । नर्तितं नर्त्तकीभिश्च तालमानलयानुगं ॥ ९८ ॥ कारयित्वा ततः पूजां स्तंभकोदंडयो-
स्तयोः । नृपेण आह्वयामास ज्ञानी सर्वान् महीभुजः ॥ ९९ ॥ आगच्छत्सु महीपेपु पूर्णपार्श्वेपु सेवकैः ।
तत्रोपवेश्यमानेषु ज्ञानी वेगेन निर्ययौ ॥ १०० ॥ कृत्वा स्वाभाविकं रूपं गत्वा गांधर्वसंसदि । नैमित्तिक-

पुमानेष आसीनः सर्वैमैक्षत ॥ १ ॥ क गतः सोऽभवच्चात्रेत्यादि जल्पन् ससंभ्रमः । नृपस्तं वीक्षयामास जनैः कापि स नेक्षितः ॥ २ ॥

जगादाथ नृपः सर्वं विधाय निजभाषितं । अर्द्धप्रसाधितं मंत्रं साधितुं स गतो ननु ॥ ३ ॥ नैमित्तिकवचः सर्वं मिलितं नैकमेव तु । महाचलकुमारो यत्कन्यायाः कथितो वरः ॥ ४ ॥ केनापि कारणेनात्र स न प्राप्तो महोत्सवे । इदं मम सुतारत्नं स कथं परिणेष्यति ॥ ५ ॥ शृण्वन्निति कुमारः स हसंश्च पिहिताननः । चित्ते जगाद सर्वं हि निदाने ज्ञास्यते पुनः ॥ ६ ॥ अथ सर्वेषु भूपेषु निविष्टेषु यथाक्रमं । श्रुतांधकूपनिक्षेपमुख्यकन्याकथोक्तिषु ॥ ७ ॥ यूयं यामिह कन्यां भोः परिणेतुं समागताः । हता सा तत्किमासीना अन्योऽन्यमितिवादिषु ॥ ८ ॥ राजादेशेन वंद्यूचे यूयं सर्वेऽपि भूभुजः । बाह्वोर्बलेन दुष्प्रेक्ष्या आकर्णयत मद्वचः ॥ ९ ॥ त्रिभिर्विशेषकं ॥ वज्रसाराभिधं चापमिदमारोप्य लीलया । एकेनैव प्रहारेण नाराचस्य दृढीयसा ॥ १० ॥ द्विहस्तमानमेतस्य स्तंभस्याग्रं निरावृति । आहत्याशु द्विधा योऽत्र करिष्यति महाबलः ॥ ११ ॥ परिणेष्यति कन्यां स आविर्भूतां कुतोऽप्यतः । इत्युक्तं कुलदेवीभिरस्माकमिह पर्वणि ॥ १२ ॥ त्रिभिर्विशेषकं ॥

अथोत्थाय महोत्साहो वंदिवाक्येन वेगतः । दुर्द्धर्षधनुरालोक्य लाटः पाटवमुज्झहो ॥ १३ ॥ वांदिना प्रेरितश्चोडो भूपीठे चरणं दधौ । कोदंडोद्दंडतां वीक्ष्य कालिमानं मुखे पुनः ॥ १४ ॥ आददानो धनुर्गौडो भारेण निपतन् भुवि । जहसे राजलोकेन दत्तताळं परस्परं ॥ १५ ॥ चापमादाय कर्णाटो बाणं तूर्णं च मुक्तवान् । तस्थौ शरीरसंकोचं दधानोऽयं पुनश्चिरं ॥ १६ ॥ स्थानान्न चलिताः केऽपि केऽपि लक्ष्याच्च्युता नृपाः । केऽपि जघ्नुः शरैः स्तंभं संरंभेण समन्विताः ॥ १७ ॥ अभिन्ने तत्र ते स्तंभे लज्जया भूभुजो भृशं । आत्मानं बहु निंदंतो वीर्याहंकारमत्यजन् ॥ १८ ॥ राजापि वीरधवलश्चिंतयामास चेतसि । प्रकटा नाऽभवत्कन्या जने हास्यं भविष्यति ॥ १९ ॥ चिंताचक्रसमारूढो यावदेवं स भूपतिः । तस्थौ वीणाकरस्तावदुपस्तंभं महाबलः ॥ २० ॥ स्तंभयित्वा जनं सर्वं वीणावाद्येन तत्र सः । ग्रहीत्वा धनुराचख्यौ सत्यं पश्यत मे समे ॥ २१ ॥ मा ग्रहीस्त्वं धनुर्मुंच मुंच गांधर्विक द्रुतं । एभिर्भिन्नो न यः स्तंभः स त्वया भेत्स्यते कथं ॥ २२ ॥

इति लोकनिषेधोक्तीः शृण्वन्नारोप्य तद्धनुः । चक्रे टंकारवं लोकश्रुतीर्बधिरयन्नयं ॥ २३ ॥ मुक्त्वा तत्स्थानकं ज्ञातस्थानमध्यस्थकीलिकां । छिंदंस्तीक्ष्णेन बाणेन स्तंभं तं हतवानसौ ॥ २४ ॥ ऊर्ध्वं विध-

टिते तस्मिन् सुदृढे स्तंभसंपुटे । पुण्यमुद्घटितं वीरधवलस्यास्य भूपतेः ॥ २५ ॥ कर्पूरमिश्रश्रीखंडकस्तूरीकृतलेपना । दिव्यालंकारवसना तांबूलपूरिताननाः ॥ २६ ॥ वामेन पाणिना चारुवीटकं दक्षिणेन च । वरमालां च तं हारं श्रीपुंजं बिभ्रती हृदि ॥ २७ ॥ तन्मध्ये ददृशे राज्ञा कन्या मलयसुंदरी । आनंदपूर्णमनसा समकालं जनेन च ॥ २८ ॥ त्रिभिर्विशेषकं ॥ अथाप्रच्छि कुमारी सा नृपेण मुदितात्मना । वत्से कथय काष्ठे त्वं प्रविष्टात्र कथं कदा ॥ २९ ॥ ततो जगाद सा बाला पश्यंती पितरं दृशा । जीविता यत्प्रसादेन कुलदेव्यो विदंति ताः ॥ ३० ॥ कुमार्यामिति जल्पंत्यामवतार्यावतारणं । वस्त्राद्यैर्वस्तुभिर्भूरिलोको राजादिकोऽवदत् ॥ ३१ ॥ कुमारि त्वमिहास्माकं मिलिता स्मरतामिति । दृक्ष्यामो नयनैरेभिः किं कदापि कुमारिकां ॥ ३२ ॥ उच्चे चंपकमालाथ जाताहं वैरिणीव ते । त्वया वत्स कथं सोढं दुःखं तत्तादृशं पुनः ॥ ३३ ॥

राजा जगाद वत्से त्वं निपतंत्यंधकूपके । धृताऽस्मत्कुलदेवीभिः स्थापिता चात्मसन्निधौ ॥ ३४ ॥ माभूदस्याः कुमार्यास्तु योऽपि सोऽपि वरः किल । इति राजकुमाराणां सत्वस्य कषहेतवे ॥ ३५ ॥ मध्येस्तंभं कुमारि त्वां क्षिप्त्वा शृंगारबंधुरां । वरमालाकरां चारुचंदनादिभिरर्चितां ॥ ३६ ॥ अपहृतेन कन-

कवतीपार्श्वाद्दलादपि । लक्ष्मीपुंजाख्यहारेण कंठक्षिप्तेन भूपिता ॥ ३७ ॥ एताभिरेव ह्यस्माकमेप स्तंभः समर्पितः । अधुना कुलदेवीभिः पाणिग्रहणपर्वणि ॥ ३८ ॥ चतुर्भिः कलापकं ॥ राजाख्यद् ज्ञानिनो ज्ञातं सर्वमस्तीति संप्रति । स्वप्नेऽप्यागत्य किमपि नोक्तं ताभिरिति ध्रुवं ॥ ३९ ॥ अहो समीहितं सर्वं सिद्धं संप्रति मामकं । सा च दूरे गता चिंता भाग्यमुद्घटितं पुनः ॥ ४० ॥ स्वाद्करोति महामात्यास्तदेकं हृदये मम । यत्तेन ज्ञानिना दिष्टो वरः पुत्र्या महाबलः ॥ ४१ ॥ यद्यथा कथितं तेन तत्सर्वं मिलितं तथा । एतदेवान्यथा जातं यत्कुमार्या वरो न सः ॥ ४२ ॥ यदेपोऽत्र महांस्तंभो वैणिकेन महौजसा । अनेन दारितो नूनं कुमार्या वर एप तत् ॥ ४३ ॥ शृण्वन्निति नरेंद्रस्य वाक्यान्येप महाबलः । कृतकृत्योऽहसच्चित्ते वस्त्रेण पिहिताननः ॥ ४४ ॥

इतश्चोचे कुमार्येपा क स वरः कलानिधिः । मत्पितुः सह दुःखेन स्तंभो येन विदारितः ॥ ४५ ॥ जल्पंतीति मृदु स्तंभफालीमध्याद्विनिर्ययौ । वेगवल्लोपमात्राशु दत्तहस्तोपसृत्य सा ॥ ४६ ॥ लोकानां चित्तसंतोपं ददती गमनेन च । भंजती भूभुजां मूलात्तां मनोरथमालिकां ॥ ४७ ॥ धृतगांधर्विकाकारमारविभ्रमधारिणः । महाबलकुमारस्य कंठे मालामलोठयत् ॥ ४८ ॥ त्रिभिर्विशेपकं ॥ अथो मिथो नरेंद्रास्ते

तद्रूपेण चमत्कृताः । वदंतिस्म परीक्षाहो कुमार्या इह कीदृशी ॥ ५० ॥ यदेषूत्तमवंशेषु राजपुत्रेषु सत्स्वपि । अज्ञातकुलवंशादिर्गत्वा गांधर्विको वृतः ॥ ५१ ॥ ततो वयं सहिष्यामो नवं नैतत्पराभवं । हत्वा गांधर्विकं त्वेनं ग्रहीष्यामः पतिं वरां ॥ ५२ ॥ इति संभूय ते सर्वे यावत्तं हंतुमुद्यताः । तावच्छ्वसुरसैन्येन वेष्टितो वैणिकः क्षणात् ॥ ५३ ॥ वज्रसारं तदेवाशु चापमादाय लीलया । आविश्चक्रे कुमारः स बाणवर्षेण विक्रमं ॥ ५४ ॥ महाबले महाबाहो तस्मिन्निघ्नति भूभुजः । लगुडे पतिते काका इव नेशुर्दिशो दिशि ॥ ५५ ॥ अत्रांतरे कुमारः स रोमांचकवचं वहन् । एकेन भट्टपुत्रेण दृष्टः पूर्वमबुध्यत ॥ ५६ ॥

पेठे तेनेत्ययं सूनुः सुरपालनरेशितुः । महाबलो महावीर्यश्चिरं जयतु भूतले ॥ ५७ ॥ चिंतितं तेन भूपेन स्वयंवरविधायिना । अहो किं श्रूयते कर्णसुधासारोपमं वचः ॥ ५८ ॥ ऊचे च ब्रूहि रे सम्यक् कुमारः कोऽयमीदृशः । सोऽवोचदेव संदेहो न कोऽप्यत्र मनागपि ॥ ५९ ॥ प्रसादैरहमेतस्य वृद्धिमेतावतीं गतः । अपि दृष्टं न किं वेद्मि कुमारं तं महाबलं ॥ ६० ॥ उवाच भूपतिर्वृष्टिरनभ्राभूदहो इयं । अकस्मादेव तज्जातमगम्यं मनसापि यत् ॥ ६१ ॥ अहो अवितथं जातं कथितं तस्य चाधुना । प्रचलेन्मेरुचूलापि न पुनर्ज्ञानिनो वचः ॥ ६२ ॥ तत्किं तारापथात्किं वा दिक्चक्रात्किं रसातलात् । कुमारोऽयं समायातः

सम्यग्न ज्ञायतेऽपि किं ॥ ६३ ॥ अस्तु तावदियं चिंता सांप्रतं ज्ञास्यते यतः । पश्चादपि कुमारस्य मुखेनैवाखिलं हृदः ॥ ६४ ॥

करोम्यहं विनश्यंति कार्याण्यन्यानि सांप्रतं । ध्यात्वेति ते नृपास्तेन बोधयित्वाऽपसारिता ॥ ६५ ॥ कुमारं जेमयामास कुमारीं स्वजनानपि । भोजनं प्रेषयामास राजान्येषां च भूभुजां ॥ ६६ ॥ विलोकितेऽपि सर्वत्र न लब्धे ज्ञानिपूरुषे । दध्यौ भूपो गतो नूनं निरीहः सोऽन्यकार्यकृत् ॥ ६७ ॥ बुभुजे भूपतिः पश्चात्सार्द्धं चंपकमालया । सामग्रीं कारयामास लग्ने चासन्नसंस्थिते ॥ ६८ ॥ पूजयामास भूपालो विधिवत्कुलदेवताः । बंधुवृद्धगुरूंश्चापि वस्त्रतांबूलभोजनैः ॥ ६९ ॥ प्रावर्त्तत महे तत्र सज्जनानां परस्परं । विलेपनानि किं मूर्त्ता अनुरागा बहिःस्थिताः ॥ ७० ॥ सिक्ता दानांबुना राज्ञा यशोवल्ली तदा तथा । प्रसरंत्या यथा तस्यास्तुच्छोऽभूद्विश्वमंडपः ॥ ७१ ॥ विनिघ्नन् श्रुतिमर्माणि तदा तूर्यरवो महान् । चतुरक्षांश्चकारोच्चैर्जीवान् पंचेंद्रियानपि ॥ ७२ ॥ स्थिरास्थिराणि लोकानां मनःशीर्षाणि कुर्वती । मधुरा विस्तृता गीतिर्गंधर्वाणामिहोत्सवे ॥ ७३ ॥ नृत्यन्नारीत्रुटद्धारमौक्तिकैर्मंडपाजिरं । कुंकुमद्रवसंसिक्तं । बभौ हर्षांकुरैरिव ॥ ७४ ॥ सारशृंगारधारिण्यः कोकिलामधुरस्वराः । जगूरंगेण कामिन्यः सधवा धवलानपि ॥७५॥

वधूवरतनुन्यस्तं वभौ चांदनलेपनं । तरंगितं नु लावण्यं नूनं यौवनवायुना ॥ ७६ ॥

वधूवरं सदोदारं भूषितं भूरिभूषणैः । कल्पवल्लीकल्पवृक्षश्रियं तदवहत्तदा ॥ ७७ ॥ आरक्तसूत्रवल्लैकमदनाख्यफलोपधैः । ताभ्यां भोक्तुं सरागः किं स्नेहग्रंथिः करे कृतः ॥ ७८ ॥ वेदध्वनौ प्रवृत्तेऽथ भट्टानां च जयारवे । मंगले क्रियमाणे च वेदी ताभ्यामलंकृता ॥७९॥ वेद्यंगानि व्यराजंत चत्वारि परितस्तयोः । सेवावसरमिच्छंतः पुरुषार्थाः स्थिता इव ॥ ८० ॥ ज्वलनः प्रज्वलंस्तत्र वभौ नूनं तयोर्द्वयोः । नृत्यन्निवानुरागोऽयं वहिर्भूत्वा प्रमोदतः ॥ ८१ ॥ कारिते विधिना तत्र विधिशेषे पुरोधसा । निष्प्रत्यूहं प्रववृते तत्पाणिग्रहणोत्सवः ॥ ८२ ॥ उज्ज्वलनेपथ्यधरो वरोऽभाद्वल्लभान्वितः । सुखलक्ष्म्यान्वितो मूर्त्त इव पुण्यमहोत्करः ॥ ८३ ॥ आशासितावुभावेवं पितृभ्यां तौ तु दंपती । संयोगो युवयोरस्तु ज्योत्स्नाचंद्रमसोरिव ॥ ८४ ॥

प्रभूतं नरनाथेन कुमाराय प्रकल्पितं । निजलक्ष्म्यनुमानेन गजवाजिरथादिकं ॥ ८५ ॥ ततस्ताभ्यां प्रहृष्टाभ्यां आश्रिते वासवेश्मनि । तदैव भूपतिर्गत्वा पप्रच्छेति महाबलं ॥ ८६ ॥ कुमार त्वं पुरात्स्वीयादेकाकी कथमागतः । अतर्कितोऽत्र पुण्यैर्नः कार्यस्यैव क्षणे वद ॥ ८७ ॥ पूर्वप्रपंचितं स्वीयकूटस्य

सदृशं वचः । कुमारः श्लिष्टमानख्यौ दृष्ट्वा संज्ञापयन् प्रियां ॥ ८८ ॥ उत्पाट्याहं महाराज देव्यानीतो-ऽत्र रंहसा । राजाह घटते सर्वं तत्कृतं कुलदैवतैः ॥ ८९ ॥ कुमारः स्माह मे नूनं पितरौ विरहाऽसहौ । अस्यातामतिदुःखेन पश्यंतौ मामितस्ततः ॥ ९० ॥ यदि द्वादशयामांतर्लप्स्येते नैव मामिमौ । मरिष्य-तस्तदा नूनमतिस्नेहलमानसौ ॥ ९१ ॥ ततः प्रसादमाधाय देव मां विसृजाधुना । मह्यं मम पितृभ्यां च देहि त्वं ननु जीवितं ॥ ९२ ॥ प्रतिपद्दिवसे सूर्येऽनुद्गतेऽहं गतो यदि । पृथ्वीस्थानपुरे तन्मे पितृभ्या-मस्ति संगमः ॥ ९३ ॥ इति श्रुत्वा नृपेणोचे न कुमाराऽधृतिस्त्वया । कर्त्तव्या कापि यच्चिंता सर्वेषां वर्त्तते मम ॥ ९४ ॥ द्वाषष्टियोजनानीतः पृथ्वीस्थानपुरं हि तत् । रजन्याः प्रथमं यामं तिष्ठ त्वं तावदत्र भोः ॥ ९५ ॥ यावद्यानाव्य करभिं प्रगुणां कारयाम्यहं । स्वस्थानेषु नृपान् क्रुद्धान् सत्कृत्य प्रेषयामि च ॥ ९६ ॥ युग्मं ॥ इत्युदित्वा गते भूपे प्रोक्तकार्यचिकीर्षया । कुमारः स्माह हे कांते जातं तावदभीप्सितं ॥ ९७ ॥ परिणेष्याम्यहं साक्षात्त्वां दत्तां जनकादिभिः । प्रतिज्ञेति कृता याभून्मया साप्यद्य पूरिता ॥ ॥ ९८ ॥ मिलिताभ्यां तदा किंत्वावाभ्यां भट्टारिकागृहे । कार्योत्सुकतया स्तोका स्वस्ववार्त्ता प्रकाशिता ॥ ९९ ॥ इदानीं सा पुनर्वार्त्ता स्फुटा वाच्या परस्परं । यावदायाति भूपालः प्रयाणप्रेरणाय मे ॥१०००॥

इतस्तत्रागता वेगवती धात्री तमब्रवीत् । किमिदं देवताकृत्यं किं वान्यत्कथय स्फुटं ॥ १ ॥ ऊचे मलयसुंदर्या गुह्यस्थानमियं मम । अनो निःशंकमाख्याहि वेगवत्या ममापि च ॥ २ ॥ कथयित्वा ततः सर्वं मुद्राप्रक्षेपणादिकं । द्वितीयदिवसे सायं यावत्तत्र कृतं पुरा ॥ ३ ॥ कुमारः कथयामास श्रूयतामग्रतः प्रिये । कार्यसिद्धिकृते यद्यन्मयात्र विहितं निशि ॥ ४ ॥ युग्मं ॥ कृत्वा सायं पुरो राज्ञो मंत्रसाधनकैतवं । किंचिद्द्रविणमादाय निर्गतोऽहं नृपांतिकात् ॥ ५ ॥ गृहीत्वा तेन वित्तेन तक्षोपकरणादिकं । कर्पूरवर्णकार्यं च गतो भट्टारिकागृहं ॥ ६ ॥ ये अंतःशुपिरे दृष्टे तदोर्व्यौ काष्ठफालिके । रमणीयतमे कामं तक्षित्वा ते मया कृते ॥ ७ ॥ तयोर्मध्ये मया नष्टाः कीलिकाश्च विनिर्मिताः । ऊर्ध्वभागे तथा चैका गूढा यंत्रप्रयोगतः ॥ ८ ॥ इतश्च तस्कराः केऽपि आदाय मंजूषामिह । समागताश्च वेगेन भयाकुलशरीरिणः ॥ ९ ॥ दृष्ट्वा मां च विशेषेण भीता नष्टाः कुतोऽपि ते । मंजूषामुपभित्तिकं क्षिप्त्वा द्रविणसंयुतां ॥ १० ॥ आगत्याहमथैकेन लोलुपेनेति याचितः । तालं भंक्तुमहं नालं तत्त्वमुद्घाट्य देहि मे ॥ ११ ॥ मया तथा कृते तेन मंजूषासंस्थितं वरं । बध्ध्वा पोट्टलके वस्तु हीनसत्वेन जल्पितं ॥ १२ ॥ यदि यास्याम्यहं चौरा—स्तेऽन्ये वा राजपूरुषाः । आगत्यानुपदं शीघ्रं मां हनिष्यंति निश्चितं ॥ १३ ॥ कथं करोमि तद्वीर

सुधियं मे समादिश । कारुण्येन मया तस्य रक्षोपायोऽथ चिंतितः ॥ १४ ॥ पद्मशिलां मयोद्घाटय तत्र भट्टारिकागृहे । निक्षिप्तः शिखरे चौरः स लोप्त्रेण समन्वितः ॥ १५ ॥

तथैव तां शिलां मुक्त्वा स्थितं देवीगृहांगणे । वटवृक्षं समारुह्य यावत्तावहितः स्थितः ॥ १६ ॥ सर्वं तावन्मया दृष्टं तत्रागमनमिच्छता । मध्ये वटकोटरं स्वं वस्त्रालंकरणादिकं ॥ १७ ॥ तया देवतया मत्तो हृत्वैतानीह कोटरे । मुक्तानीति मया ज्ञात्वा गृहीतान्यखिलान्यपि ॥ १८ ॥ इतस्त्वामागतां वीक्ष्य तत्रोन्मार्गेण मंदिरे । उत्तीर्याहं वटस्कंधान्मिलितोऽस्मि त्वया सह ॥ १९ ॥ इत्याख्यातं मया कांते तवाग्रे चरित्तं निजं । त्वमप्याख्याहि मे मूलादात्मीयं विहितं तदा ॥ २० ॥ सा जगाद ततः स्वामिन् शिक्षा ते दधती हृदि । पुंरूपेण ततः स्थानाद्गताहं पुरमंतरा ॥ २१ ॥ पृच्छंत्या मागधावासं भ्रमंत्या तत्र वेश्मसु । एकस्मिन्मागधा दृष्टा मया देवकुले तु सा ॥ २२ ॥ परमेकेन धूर्त्तेन क्षिप्ता सा संकटे दृढे । लभते चलितुं नापि का कथा भोजनादिके ॥ २३ ॥ मया पृष्टाथ साचख्यौ सगद्गदमिदं वचः । अहो सत्पुरुषाहं किं ब्रवीमि प्रतिभोज्झिता ॥ २४ ॥ उपविष्टास्म्यहं यावदात्मीयमंदिराजिरे । तावदेष समागत्य धूर्त्तः पार्श्वे ममासितः ॥ २५ ॥ हा स चोक्तो मया नैष ज्ञातो धूर्त्तशिरोमणिः । संवाहय ममांगं भोस्तुभ्यं

दास्यामि किंचन ॥ २६ ॥ अनेन मर्दितं मेंगं चतुःसंवाहनाक्रमात् । तुष्टयाऽयं मयाऽभाणि भोजनं कुरु सुंदर ॥ २७ ॥ एष साहाऽशनेनालमुक्तं किंचन देहि मे । वस्त्रद्रम्मशतार्थं च मानितं क्रमतो मया ॥ ॥ २८ ॥ न गृह्णाति किमप्येष धूर्तः किंचन याचते । अतोऽयाहं धृतानेन दत्तेऽपि चलितुं न हि ॥ २९ ॥ ततो नाथ मया ध्यातं पतिताया महापदि । अस्याः सेत्स्यति मे कार्यमुपकारे कृतेऽधुना ॥ ३० ॥ मागधाया मया किंचित्कथयित्वा ततः श्रुतो । पश्चात्तौ गदितो गत्वा भोजनं कुरुतं युवां ॥ ३१ ॥ आगंतव्यं युवाभ्यां हि तृतीये प्रहरे पुनः । भंजनीयो मयाऽवश्यं विवादो युवयोरयं ॥ ३२ ॥ महाबलो जगादाशु विवादो विषमस्तयोः । कथं भग्नस्त्वया मंक्षु सोवाच श्रूयतां पुरः ॥ ३३ ॥ मार्गश्रमादहं खिन्ना सुप्ता तत्रैव वेश्मनि । तौ द्वावपि समायातौ तृतीये प्रहरे पुनः ॥ ३४ ॥ उत्थापिताहमात्मीयदास्या मागधया ततः । छन्नो देवकुलस्यांतः पिहितो मोचितो घटः ॥ ३५ ॥

तावुभौ वादिनावुक्तौ विधाय साक्षिणो मया । भनज्मि युवयोर्वादं दत्वा किंचन सांप्रतं ॥ ३६ ॥ प्रतिपन्ने ततस्तेन कथं दास्यति किंचन । इत्येवं विस्मिते लोके मागधा संज्ञिता मया ॥ ३७ ॥ ततो मागधयावादि प्रतिवादी सुरौकसः । मध्येऽस्ति किंचन घटः स्वयं गत्वा गृहाण तत् ॥ ३८ ॥ मध्ये

चरित्रं

गत्वाथ यावत्स उद्घाट्य च पिधानकं । चिक्षेपाशु घटे हस्तं तावद्दष्टोऽहिरुच्छ्वसन् ॥ ३९ ॥ तेनाशु कर्पता हस्तं जगदेऽस्तीह किंचनं । ततो मागधयाभाणि हसंत्या हर्पयुक्तया ॥ ४० ॥ मयासीन्मानितं यत्ते तदिदं त्वं गृहाण भोः । मम तेऽपि न संबंधस्तव मुक्तास्म्यहं ग्रहात् ॥ ४१ ॥ हसंतोऽथ जनाः प्रोचुः सर्वे तत्रेत्यहो मतिः । अनेन योग्यमेतस्य दत्तं सुष्ठ्विति किंचन ॥ ४२ ॥ सर्पदष्टो महाधूर्त्तः स नीतस्तोतलामठं । अहं तु स्वगृहं नीता तया मागधयाऽग्रहात् ॥ ४३ ॥ प्रविशंत्या मया गेहं भणितं न विशाम्यहं । येनात्र वसति द्वेष्यं राज्ञः किंचन मानुपं ॥ ४४ ॥ संभ्रांता मागधा दध्यौ नूनं सामान्य एष न । नरः कोऽपि चरज्ञानी प्रच्छन्नो भ्रमति क्षितौ ॥ ४५ ॥ ततो मत्पादयोर्लग्ना दीना सती व्यजिज्ञपत् । प्रसद्य सत्पुमन् वार्ता कर्त्तव्या न बहिस्त्वया ॥ ४६ ॥ राज्ञी कनकवत्येषा कूटं कृत्वा नृपात्मजां । मारयामास भूपेन वैरिणीव निरागसं ॥ ४७ ॥ कूटेऽथ प्रकटीभूते वीक्ष्यमाणा नृपेण सा । पूर्वस्नेहेन मे गेहे रजन्यामेत्य तस्थुषी ॥ ४८ ॥ कृत्वा प्रसादमेतां तज्ज्वलंती गड्डुरीमिव । त्वं सत्पुरुष मे गेहान्निष्काशय कथंचन ॥ ४९ ॥ मयोचे नाथ यद्येनां गृहान्निष्काशयामि ते । ततो मे स्यान्महद्वैरं सांप्रतं सार्द्धमेतया ॥ ५० ॥

अन्यच्चाहमिमां कर्पन् प्राप्तश्चेद्भूपपूरुषैः । पतिष्यावस्तदानर्थजाले ह्यावामुभावपि ॥ ५१ ॥ परं

तवोपरोधेन करिष्ये सर्वमप्यदः । मेलये रहसि त्वं तु रजन्यामथ तां मम ॥ ५२ ॥ तुष्टा सा जेमयामास मां तदा गुरुभक्तितः । एकांते निशि जातायां मेलिता सा तया मम ॥ ५३ ॥ पश्यंती मां च जल्पंती नर्मवाक्यान्यनेकशः । कामार्थं प्रार्थयामास सा विद्धा कामसायकैः ॥ ५४ ॥ मयाप्युक्तं वयस्यो मे वल्लभो रूपमन्मथः । भार्यार्थी विद्यते किंतु कार्येणाथ गतः क्वचित् ॥ ५५ ॥ आगामिन्यां रजन्यां तु संकेतोऽस्ति कृतो मम । गोलातरंगिणीतीरे तेन भट्टारिकागृहे ॥ ५६ ॥ आगच्छेस्त्वं ततस्तत्र सोऽप्यायास्यति निश्चितं । तर्हि सुष्ठुतरं याहि युवयोर्मेलति द्वयोः ॥ ५७ ॥ अन्यथा मनसी नूनं मिलिते स्तस्तवापि मे । तया प्रोक्तं युवां कस्मादिहायातौ च कीदृशो ॥ ५८ ॥ मयोक्तं क्षत्रियावावां चलितौ विषयांतरे । सत्यं कनकवत्यापि सर्वमंगीकृतं ततः ॥ ५९ ॥ तस्यामात्मकृतं सर्वं कथयंत्यां पुरो मम । विभातायां विभावर्यां पुनः पृष्टं मया ततः ॥ ६० ॥ सुंदर्याख्याहि किं चित्ते पार्श्वेऽस्त्याभरणादिकं । अथानीय तया सर्वं दर्शितं प्रीतया मम ॥ ६१ ॥ एतावन्मात्रमेवैतत्पुनः पृष्टे तयोदितं । लक्ष्मीपुंजाभिधो हारो निक्षिप्तोऽस्ति मया कुतः ॥ ६२ ॥ दिवाहं नैव शक्नोमि तत्र गंतुं कथंचन । रजन्यामपि यास्यामि नृपात्कृच्छ्रेण बिभ्यती ॥ ६३ ॥

ज्ञात्वा स्थानं महाहारं तमाक्रष्टुं यदि क्षमा । तदाऽऽगच्छ गृहीत्वा त्वं पश्चाद्यात्व उभावपि ॥ ६५ ॥ अन्यथागत्य संध्यायां कथनीयं त्वया मम । इत्यालोच्य मिथो मालादुत्तीर्णाहं ततः प्रिय ॥ ६६ ॥ पृष्टे मागधयाशंसि मयाप्येवं तदग्रतः । तव प्रार्थनया भद्रे तथास्ति विहितं मया ॥ ६७ ॥ वारयंत्यामपि यथा त्वय्येषा निशि यास्यति । ततो भोजनसामग्रीं हृष्टा मे मगधा न्यधात् ॥ ६८ ॥ मया प्रच्छन्नया तत्र गत्वा प्रेक्षि समंततः । गर्त्तापूरोऽस्य स्तंभस्य प्रापि हारः परं न सः ॥ ६९ ॥ ततः कनवत्येतन्निशि गत्वा मयोदिता । गृहीत्वा तं महाहारं तत्रागच्छेस्त्वमित्यपि ॥ ७० ॥ आपृच्छ्य मागधावेश्यां ततः स्थानात्कथंचन । संकेतस्थानमायांती भ्रष्टाहं मूलमार्गतः ॥ ७१ ॥ भ्रामं भ्राममुन्मार्गेण तदा तत्राहमागता । मिलिता पुण्ययोगेन तव हारकथार्थिनः ॥ ७२ ॥ स्वयं सा कनकवती गृहीत्वा हारमेष्यति । अत्र त्वां पतिमिच्छंती मयेति कथितं वचः ॥ ७३ ॥ नार्येदृश्या समं वक्तुमपि नो युज्यते मम । इत्युक्त्वाव च मे शिक्षां दत्वा स्वामी तिरोऽभवत् ॥ ७४

इतश्चागता कनकवतीत्यालापिता मया । आगच्छ निभृता तिष्ट क्षणमायांति तस्कराः ॥ ७५ ॥ तव पार्श्वेऽस्ति यत्किंचित्तत्सर्वं मे समर्पय । येन वक्षाम्यहं भीत्या । तदानीं च तयार्पितं ॥ ७६ ॥ लक्ष्मी·

पुंजं महाहारं वरमेकं च कंचुकं । तन्मध्यान्मयादाय शेषमेकत्र मेलितं ॥ ७७ ॥ मध्ये तस्करमंजूषं स क्षिप्तो ग्रंथिको मया । सा चाक्ता तस्करा एते यावद्गच्छंति सुंदरि ॥ ७८ ॥ तावत्त्वं विश मंजूषामध्ये साध्वसकातरा । प्रविष्टायां ततस्तस्यां मया दत्तं च तालकं ॥ ७९ ॥ आकार्य स्वामिनं मातर्मंजूषां ता-मुत्पाट्य च ॥ क्षिप्त्वा मध्येसरिद्धेरमावाभ्यां वालितं तदा ॥ ८० ॥ स्वनिष्ठ्युतेन भाले मे स्वामिना मर्दितं ततः । जातं मलयसुंदर्या रूपं स्वाभाविकं च मे ॥ ८१ ॥

एतस्यानुज्ञया मातर्मयुर्लिप्त्वा विलेपनैः । परिधाय दुकूले ते कोटराप्ते च कुंडले ॥ ८२ ॥ मनो-हारं तथा हारं लक्ष्मीपुंजं च हृद्यहं । बिभ्राणा वरमालां च करे काष्टदले स्थिता ॥ ८३ ॥ युग्मं ॥ भव-त्या स्वस्थया स्थेयमित्थमित्थं भविष्यति । एवमेवं च कर्त्तव्यं सर्वं सुंदरी तत्र तु ॥ ८४॥ वादयिष्याम्यहं तत्र वीणां किंतु स्वयंवरे । यदा शृणोषि वीणायाः स्वरं तं त्वं विचक्षणे ॥८५॥ तदेमाः कीलिका नष्टाः कर्षणीयास्त्वया किल । इत्युक्त्वा स्वामिनाऽयोजि द्वितीयं दारुणो दलं ॥ ८६ ॥ त्रिभिर्विशेषकं ॥ दत्ता-श्च कीलिका नाथ नाहं जानाम्यतः परं । ततः प्रसीद जल्प त्वं किं किं देव कृतं त्वया ॥ ८७ ॥ महा-बलो बभाणाथ मया स्तंभोऽनुचिलितः । तथाशु वर्णकैश्चित्रैर्न किंचिद्ज्ञायते यथा ॥ ८८ ॥ शेषं तद्व-

र्णकायं तु क्षिप्तं गोलानदीजले । इतश्च ते समायाता महाचौराः सलोप्त्रकाः ॥ ८९ ॥ पश्यंतस्तं समं-
जूषं चोरं यांत इतस्ततः । आभाषिता मया चोरा—स्तत्संकेतेन ते तदा ॥ ९० ॥ विश्वस्तैस्तैरहं पृष्टः
समंजूषं मलिम्लुचं । तांबूलदानपूर्वं ते पुनश्चौरा मयोचिरे ॥ ९१ ॥ नीत्वा स्तंभं यदीमं प्राक् प्रतोली-
द्वारसन्निधौ । यूयं मुंचथ युष्मांस्तं तस्करं तर्ह्यहं ब्रुवे ॥ ९२ ॥ तथेत्युक्त्वा ततो लोप्त्रं तैः क्षिप्त्वा च
नदीतटे । संभूयोत्पाटितः स्तंभः पुनरागत्य तस्करैः ॥ ९३ ॥ मया तत्पृष्ठलग्नेन पूर्वगोपुरसन्निधौ । स्था-
नके वांछिते स्तंभो मोचितोऽतिप्रयत्नतः ॥ ९४ ॥ तत्र क्षिप्तो वराकः स मया मा मृत तस्करैः । ध्या-
त्वेति हृदि चोराणां तेषां दत्तं मृषोत्तरं ॥ ९५ ॥ अहो तेनातिलुब्धेन मंजूषायाः कथंचन । उद्घाट्य ता-
लकं सर्वं गृहीतं भवतां धनं ॥ ९६ ॥ प्रवाहे तारितां नद्या मंजूषामधिरुह्य तां । ततः स तस्करो मध्ये
नदीवेगेन निर्ययौ ॥ ९७ ॥

मया दृष्टमिदं सर्वं छन्नेनाभ्यर्णवर्त्तिना । ततस्तैर्भणितं चौरैः सत्यं ज्ञातं स्फुटं त्वया ॥ ९८ ॥ या-
वन्निशास्ति तावत् स यास्यत्येवं प्रगे पुनः । त्यक्त्वा पेटीं गृहीत्वा च तत्सर्वं क्व गमिष्यति ॥ ९९ ॥ यत्र
वा तत्र वा यातु मिलिष्यति कदापि नः । इत्युक्त्वा दस्यवस्तेऽपि निर्ययुर्मम पार्श्वतः ॥ ११०० ॥ युग्मं ॥

॥ २४ ॥ तत्किं करोमि यामि क्व जल्पन्निति नरेश्वरः । यावत्तस्थौ विमूढात्मा मग्नश्चिताभरांबुधौ ॥ २५ ॥ तावद्वेगवती स्माह देवाधीश्वर निश्चितं । महाबलः स एवैष सैषा मलयसुंदरी ॥ २६ ॥ किंतु रात्रौ बहिर्यातौ पातयित्वा छले बलात् । हतौ केनापि देवेमाविति संभाव्यते ध्रुवं ॥ २७ ॥

ततो देशांतरारण्यनदीपर्वतभूमिषु । विलोकयत सर्वत्र संप्रेष्य निपुणान्नरान् ॥ २८ ॥ पृथ्वीस्थानपुरे पूर्वं शुद्धिं कारयताचिरात् । तत्रोपायेन केनापि तौ भवेतां गतौ यदि ॥ २९ ॥ इमं व्यतिकरं सर्वं सूरपालमहीपतेः । ज्ञापयताशु यत्सोऽपि समदुःखो विलोक्यते ॥ ३० ॥ साधुः साधुस्तवैषा धीः साधूपायस्त्वयोदितः । इति प्रशंसता तेन सर्वं तत्कथितं कृतं ॥ ३१ ॥ दत्वाथ शिक्षां मलयादिकेतुनामा कुमारः प्रहितो नृपेण । श्रीसूरपालस्य नरेश्वरस्य वृत्तांतमाख्यातुममुं समग्रं ॥ ३२ ॥

॥ इत्यागमिकश्रीजयतिलकसूरिविरचिते ज्ञानरत्नोपाख्याने मलयसुंदरीचरित्रे
तत्पाणिग्रहणप्रकाशनो नाम द्वितीयः प्रस्तावः समाप्तः ॥



॥ अथ तृतीयः प्रस्तावः प्रारभ्यते ॥



अथ कांता कुमारेण गतेनोचे पुराद्बहिः । श्मशाने निशि नो युक्तं स्त्रीणां संचरणं प्रिये ॥ १ ॥ तत्ते करोमि पुंरूपमित्युक्त्वाम्रसेन सः । घृष्ट्वा तां गुटिकां चक्रे तस्या भाले विशेषकं ॥ २ ॥ नृरूपा साऽभवत्तेन ततस्तौ पुरुषावुभौ । गत्वा देवीगृहं तस्मात्तं चौरं चक्रतुर्बहिः ॥ ३ ॥ ऊचतुश्चेति रे कल्ये चौरास्त्वां वीक्ष्य ते गताः । त्वं तु क्षेमेण गच्छाद्य यत्र ते मनसो रुचिः ॥ ४ ॥ प्राणलाभः स्वलाभश्च प्रसादाद्युवयोर्मम । इति जल्पन्नमंश्चापि शिरसा तस्करोऽगमत् ॥ ५ ॥ तौ द्वावपि समुत्तीर्य पुरीगमनहेतवे । देवीभवनद्वारेण वटस्याधो गतौ यदा ॥ ६ ॥ तदाभ्यां शिखरेऽश्रावि भूतालापाः परस्परं । अथो प्रोक्तं कुमारेण तिष्ठ तिष्ठ प्रिये क्षणं ॥ ७ ॥ दत्तकर्णा सकर्णे त्वं शृणुभूता वदंति किं । उपरिष्टाद्वटाग्रस्य स्थिता एते परस्परं ॥ ८ ॥ माऽमी हार्षुः पुनर्हारं ध्यात्वेति नृपसूनुना । गृहीत्वा तं प्रियाकंठात्क्षिप्तः कटिपटांतरे ॥ ९ ॥ छन्नौ द्वावपि भूत्वा तौ प्रविष्टौ वटकोटरे । अवहितचित्तौ सर्वं श्रोतुं लग्नौ महामती ॥१०॥ उवाचैको महाभूतो यूयं शृणुत मे वचः । पृथ्वीस्थानपुरेशस्य नंदनोऽभून्महाबलः ॥ ११ ॥ जनन्या-

॥ २४ ॥ तत्किं करोमि यामि क्व जल्पन्निति नरेश्वरः । यावत्तस्थौ विमूढात्मा मग्नश्चिंताभरांबुधौ ॥ २५ ॥ तावद्वेगवती स्माह देवाधीश्वर निश्चितं । महाबलः स एवैष सैषा मलयसुंदरी ॥ २६ ॥ किंतु रात्रौ बहिर्यातौ पातयित्वा छले बलात् । हतौ केनापि देवेमाविति संभाव्यते ध्रुवं ॥ २७ ॥

ततो देशांतरारण्यनदीपर्वतभूमिषु । विलोकयत सर्वत्र संप्रेष्य निपुणान्नरान् ॥ २८ ॥ पृथ्वीस्थानपुरे पूर्वं शुद्धिं कारयताचिरात् । तत्रोपायेन केनापि तौ भवेतां गतौ यदि ॥ २९ ॥ इमं व्यतिकरं सर्वं सूरपालमहीपतेः । ज्ञापयताशु यत्सोऽपि समदुःखो विलोक्यते ॥ ३० ॥ साधुः साधुस्तवैषा धीः साधूपायस्त्वयोदितः । इति प्रशंसता तेन सर्वं तत्कथितं कृतं ॥ ३१ ॥ दत्त्वाथ शिक्षां मलयादिकेतुनामा कुमारः प्रहितो नृपेण । श्रीसूरपालस्य नरेश्वरस्य वृत्तांतमाख्यातुममुं समग्रं ॥ ३२ ॥

॥ इत्यागमिकश्रीजयतिलकसूरिविरचिते ज्ञानरत्नोपाख्याने मलयसुंदरीचरित्रे तत्पाणिग्रहणप्रकाशनो नाम द्वितीयः प्रस्तावः समाप्तः ॥



# ॥ अथ तृतीयः प्रस्तावः प्रारभ्यते ॥



अथ कांता कुमारेण गतेनोचे पुराद्बहिः । श्मशाने निशि नो युक्तं स्त्रीणां संचरणं प्रिये ॥ १ ॥ तत्ते करोमि पुंरूपमित्युक्त्वाम्ररसेन सः । घृष्ट्वा तां गुटिकां चक्रे तस्या भाले विशेषकं ॥ २ ॥ नृरूपा साऽभवत्तेन ततस्तौ पुरुषावुभौ । गत्वा देवीगृहं तस्मात्तं चौरं चक्रतुर्बहिः ॥ ३ ॥ ऊचतुश्चेति रे कल्ये चौरास्त्वां वीक्ष्य ते गताः । त्वं तु क्षेमेण गच्छाद्य यत्र ते मनसो रुचिः ॥ ४ ॥ प्राणलाभः स्वलाभश्च प्रसादाद्युवयोर्मम । इति जल्पन्नमंश्चापि शिरसा तस्करोऽगमत् ॥ ५ ॥ तौ द्वावपि समुत्तीर्य पुरीगमनहेतवे । देवीभवनद्वारेण वटस्याधो गतौ यदा ॥ ६ ॥ तदाभ्यां शिखरेऽश्रावि भूतालापाः परस्परं । अथो प्रोक्तं कुमारेण तिष्ठ तिष्ठ प्रिये क्षणं ॥ ७ ॥ दत्तकर्णा सकर्णे त्वं शृणु भूता वदंति किं । उपरिष्टाद्वटाग्रस्य स्थिता एते परस्परं ॥ ८ ॥ माऽमी हार्षुः पुनर्हारं ध्यात्वेति नृपसूनुना । गृहीत्वा तं प्रियाकंठात्क्षिप्तः कटिपटांतरे ॥ ९ ॥ छन्नो द्वावपि भूत्वा तौ प्रविष्टौ वटकोटरे । अवहितचित्तौ सर्वं श्रोतुं लग्नौ महामती ॥१०॥ उवाचैको महाभूतो यूयं शृणुत मे वचः । पृथ्वीस्थानपुरेशस्य नंदनोऽभून्महाबलः ॥ ११ ॥ जनन्या-

स्तस्य केनापि हारोऽदृश्यात्मना हृतः । ततस्तेन कुमारेण पुरो मातुरितीरितं ॥ १२ ॥ चेत्पंचरात्रमध्ये न हारं हस्तेऽर्पयामि ते । तदाहं प्रविशामग्नौ मातर्ज्वालाकुले खलु ॥ १३ ॥ मात्रापि भणितं वत्स तं हारं न लभे यदि । दिनपंचकमध्येऽहं निश्चयेन म्रिये तदा ॥ १४ ॥ नास्ति तस्य कुमारस्य शुद्धिर्हारानुयायिनी । दिवसः पंचमः सूर्योदये किल भविष्यति ॥ १५ ॥ तस्यामलभमानायां कुमारं हारमप्यमुं । मृत्यवे तिष्टमानायां समायातोऽस्म्यहं ततः ॥ १६ ॥ किं विषेण जलेनाथ शस्त्रघातेन वाग्निना । पातेनोद्बंधनेनापि न जाने सा मरिष्यति ॥ १७ ॥ बहुलोकयुतस्तां तु नृपोऽप्यनुमरिष्यति । शृण्वन्निति कुमारोऽपि कोटरस्थो व्यचिंतयत् ॥ १८ ॥

नूनमेते सुराः केऽपि प्रजल्पंति परस्परं । ततः सत्यमिदं वाक्यं नैते वितथवादिनः ॥ १९ ॥ अहो विगतसत्योऽहं वर्त्ते जीवन्निहैव हि । मम तत्र कुलं सर्वं दुःखार्त्तं क्षीयते पुनः ॥ २० ॥ पुनर्जगाद भूतोऽथ गम्यते तत्र सांप्रतं । कौतुकं वीक्ष्यते कामं रक्ताद्यं स्वाद्यते तथा ॥ २१ ॥ मुक्तः सर्वैश्च हुंकार उत्पपात वटस्ततः । वटकोटरसंस्थौ तौ कुमारौ द्वौ च जग्मतुः ॥ २२ ॥ गच्छन् वेगेन स प्राप पृथ्वीस्थानपुरं वटः । क्षणेनालंबशैलस्य मेखलायां च तस्थिवान् ॥ २३ ॥ नगरासन्नवर्त्तिन्या गोलानद्यास्तटे स्थितं ।

धनंजयस्य यक्षस्य भवनं ते सुरा ययुः ॥ २४ ॥ महाबलोऽपि तद् दृष्ट्वा प्रदेशमुपलक्ष्य च । जगादाद्यापि पुण्यानि जाग्रति ह्यावयोः प्रिये ॥ २५ ॥ वटो यदेष संप्राप्तः पृथ्वीस्थानपुरं मम । तत्त्यजावोऽधुना शीघ्रमावां न्यग्रोधकोटरं ॥ २६ ॥ देवादेशेन कुत्रापि पुनर्यास्यति चेद्वटः । पतिष्यावस्ततः क्वापि गत्वावां विषमे ननु ॥ २७ ॥

मंत्रयित्वेति सहसा निरीय वटकोटरात् । यावत्तौ तस्थतुः स्वस्थावासन्ने कदलीवने ॥ २८ ॥ उत्पतंतं वटं तावद्दृष्ट्वा ताविति दध्यतुः । एष वृक्षो निजस्थानं पुनः संप्रति गच्छति ॥ २९ ॥ इतश्च वनिताक्रंदं श्रुत्वा दीनं महाबलः । पुंरूपां स्थापयामास तत्र तां दयितामिति ॥ ३० ॥ अधुनैवागतोऽत्राहं कर्त्तव्या नाधृतिः प्रिये । इत्युक्त्वानुस्वरं यातः कुमारः कृपया ततः ॥ ३१ ॥ महाबलकुमारस्य पश्यंती मार्गमेकिका । शून्ये रंभावने तत्र तस्थौ मलयसुंदरी ॥ ३२ ॥ अतिक्रांता निशा तस्याः स नायातीति चिंतया । प्रभाते सति सा दध्यौ यामि तावत्पुरांतरे ॥ ३३ ॥ भविष्यति गतस्तत्र पित्रोरुत्कंठितो हि सः । ध्यात्वेति चलिता यावत्साऽविशद्गोपुरं पुरः ॥ ३४ ॥ तलाध्यक्षेण तावत्स दिव्यवेषो विलोकितः । उक्तश्चाहो युवन् कोऽसि त्वमपूर्वोऽत्र मे पुरे ॥ ३५ ॥ अत्रुवाणे किमप्यस्मिन् दिशो मौनेन

पश्यति । सम्यगालोकितं दंडपाशिकेनेतरैरपि ॥ ३६ ॥ तानि कुंडलवस्त्राणि देहे तस्योपलक्ष्य तैः । ऊचे कुमारसत्कानि नूनमेतान्यदः किमु ॥ ३७ ॥ तलारक्षेण तेनाशु राजांतिकमनायि सः । तस्य तं वेषमालोक्य विस्मितास्ते नृपादयः ॥ ३८ ॥ ऊचुश्च कः पुमानेषोऽदृष्टपूर्वोऽतिरूपवान् । महाबलस्य सर्वोऽयं वेष एतस्य निश्चितं ॥ ३९ ॥

अथावादीत्तलारक्षो गोपुरं प्रविशन्नयं । दृष्टः पृष्टश्च बहुधा न किंचिदत्त उत्तरं ॥ ४० ॥ पृष्टो राज्ञापि सैषोऽथ कोऽसि त्वं कस्य वा कुतः । सोऽचिंतयन्निजे चित्ते सत्यं वक्ष्यामि चेदहं ॥ ४१ ॥ प्रत्येष्यंति तथाप्येते न मे वचसि संप्रति । येनावयोरसंभाव्यो वृत्तांतः सकलोऽप्ययं ॥ ४२ ॥ कुमारेण विना तस्माद्वृत्तांतः कोऽपि न स्वकः । प्रकाश्योऽयं मया नूनं यच्च भाव्यं तदस्तु मे ॥ ४३ ॥ अथोचे तेन राजेंद्र तस्य मिलमहं प्रियं महाबलेन तेनैष वेषो दत्तोऽखिलोऽपि मे ॥ ४४ ॥ सूरपालोऽवदत्कुत्र सोऽधुनास्ति महाबलः । सोऽवोचदत्र कुत्रापि स्वेच्छाचारेण तिष्ठति ॥ ४५ ॥ नृपोऽवोचत्कुमारश्चेत्क्वापि पुण्यैर्भवेदिह । तत्किमागत्य नास्माकमह्नायोक्त्वा मिलेदहो ॥ ४६ ॥ किं तु नास्ति कुमारोऽत्र पतितः क्वापि संकटे । बहुधा वीक्षितोऽप्यत्र नापि कुत्रापि येन स॰ ॥ ४७ ॥ यदि त्वं स्नेहलं मित्रं कुमारस्य सुतस्य

मे । तत्किं कोऽपि जनोऽस्माकं मध्ये त्वां नोपलक्षयेत् ॥ ४८ ॥

इत्याद्युक्तोऽपि यावत्स ददे किंचन नोत्तरं । ततो राज्ञा पुनः प्रोचे हुं ज्ञातं घटते ह्यदः ॥ ४९ ॥ अदृष्टं यद्गतं पूर्वं कुमारवसनादिकं । तत्सर्वं तेन चौरेण प्रचंडेन हृतं खलु ॥ ५० ॥ यः कल्ये निगृहीतोऽत्र पौरसर्वस्वमोपकः । लोभसारोऽभिधानेनालंवाद्रेः कंदरास्थितः ॥ ५१ ॥ युग्मं ॥ तस्यैप वांधवः कोऽपि संवंधी वापरो नरः । सांप्रतं तद्वियोगेन निर्वुद्धिश्चलिताशयः ॥ ५२ ॥ संभ्रमी वंभ्रमीत्यत्र तं पश्यन्निजवांधवं । विभ्रद्वेपं कुमारस्य वहुमौनोऽल्पभापकः ॥ ५३ ॥ युग्मं ॥ संभाव्यते हतोऽमीभिः कुमारोऽपि महावलः । अत एपोऽपि मे वैरी नीत्वा तत्र निहन्यतां ॥ ५४ ॥ इति श्रुत्वापि सा दध्यौ चित्ते मलयसुंदरी । अहो पुनः समायातं ममैतदसमंजसं ॥ ५५ ॥ प्राणांतिका महापन्मे पुनरेपा समाययौ । अलक्षितानि केनापि विधेर्विलसितान्यहो ॥ ५६ ॥

चिंतयंत्यां तमेवैकं श्लोकं मौनेन चेतसि । तस्यामूचे महामात्यैः सम्यक्च ज्ञायतेऽपि किं ॥ ५७ ॥ न साधुः कोऽपि चेदेप न चौरश्चेष्टयानया । पुरुपस्योचितं दातुं दिव्यमेतस्य देव तत् ॥ ५८ ॥ यद्यशुद्धस्तदा चोरः साधुः शुद्धश्च यद्ययं । इत्थं कृते तु युष्माकं नापवादो जने भवेत् ॥ ५९ तत्स्वीकृत्य नृपे-

णोचे दिव्यं देयं तु कीदृशं । तैः प्रोचे घटसर्पस्य दिव्यं गाढं नरेश्वर ॥ ६० ॥ राजादिष्टास्ततो जग्मुः सर्पमानेतुमुत्कटं । मेखलायामलंवाद्रेस्तस्यां गारुडिका द्रुतं ॥ ६१ ॥ लात्वा कुंडलवस्त्राणि स नरो नरवज्रिणा । नृपं विज्ञपयामास रुद्धकंठा शुचां भरैः ॥ ६३ ॥ देवी विज्ञपयत्येवं देव न ज्ञायते क्वचित् । महाबलकुमारः स तावत्सर्वगुणाकरः ॥ ६४ ॥ तदेवाद्य दिनं तेन यदुक्तं पंचमं तदा । मृतो नूनं कुमारस्तदागतोऽभूदिहान्यथा ॥ ६५ ॥ लक्ष्मीपुंजस्य हारस्य शुद्धिस्तस्यापि नाभवत् । मृते तस्मिन् कुमारे मे हारप्राप्तिस्तु दुर्लभा ॥ ६६ ॥

अलब्धे दुर्लभे हारे कुमारे च महाबले । न क्षमा जीवितं धर्तुं दुःखभारेण भारिता ॥ ६७ ॥ भृगुपातं करिष्येऽहं गत्वाऽलंवगिरौ ततः । क्षंतव्योऽतस्त्वया सर्वोऽधुना दुर्विनयो मम ॥ ६८ ॥ नृपोऽवोचदथो देवी वाच्या मम गिरा त्वया । समानं मे तवाप्येतद् दुःखं देवि सुदुस्सहं ॥ ६९ ॥ मया प्रस्थापिताः संति कुमारं वीक्षितुं नराः । दर्शं दर्शं समायांतु तावत्सर्वेऽपि ते त्विह ॥ ७० ॥ प्रवृतिं तस्य चेत्कांचिल्लभंते ते कथंचन । लभ्यश्च दिवसो देवि कुमारेणाद्य पंचमः ॥ ७१ ॥ कुमारस्याद्य शुद्धिर्न यदि कापि भविष्यति । शरणं मेऽपि ते मार्गः प्रभाते त्वं त्वरस्व मा ॥ ७२ ॥ तस्य कुंडलवस्त्राणि लब्धान्य-

द्येव देवि हे । अपूर्वपुरुपाद्यसात्कुमारस्य मया खलु ॥ ७३ ॥ अर्पयैतान्यये देव्यै कथनीयं तथा त्वया । यथैतानि कुमारोऽपि हारोऽप्यत्र तथैष्यति ॥ ७४ ॥ अनेन कारयिष्यामः पुंसा दिव्यं तु सांप्रतं । इत्युक्तेऽनेन सा दासी देव्यै गत्वाखिलं जगौ ॥ ७५ ॥ तेपु कुंडलवस्त्रेपु तया दत्तेपु विस्मिता । देव्यब्रवीत्किमेतद्भो लब्धान्येतान्यहो कुतः ॥ ७६ ॥ तेषां कुंडलवस्त्राणां लाभवृत्तांतमाह सा । ततो जगाद सा देवी हर्षशोकाकुला समं ॥ ७७ ॥ अभीष्टो मत्कुमारस्य किं कोऽप्येष पुमानिह । शुद्धिं कामपि गदितुं कुतोऽप्यत्र समागमत् ॥ ७८ ॥ किंवा केनापि रिपुणा छलघातेन तं सुतं । हत्वा कुंडलवासांसि गृहीतान्यत्र कुत्रचित् ॥ ७९ ॥

ततो गत्वेक्ष्यते सेप दिव्येन स्यात्कथं कथं । इति यक्षगृहं देवी ययौ सा सपरिच्छदा ॥ ८० ॥ पूर्वमेवागतस्तत्र राजा यक्षस्य मंदिरं । धनंजयस्य लोकोऽपि कौतुकेनामिलत्ततः ॥ ८१ ॥ तेऽपि गारुडिकास्तत्राऽऽयाता भूपं व्यजिज्ञपन् । देवाऽलंवाद्रिछिद्राणि दर्शं दर्शमनेकधा ॥ ८२ ॥ कज्जलाभो महाकायः फूत्कारैरतिदारुणः । एप सर्पो घटे क्षिप्त आनिन्येऽस्माभिरत्र हि ॥ ८३ ॥ साहिं धनंजयस्याग्रे मोचयित्वाथ तं घटं । राज्ञोचे तं नरं शीघ्रमत्रानयत रे भटाः ॥८४॥ खड्गव्यग्रकरैर्वाढं वेष्टितः सुभटैः पुमान् ।

नरिंद

शुचीभूतः स आनीतस्तत्र रूपश्रियाधिकः ॥ ८५ ॥ दृष्ट्वा तं चिंतयामास देवी लोकोऽप्यहो कथं । कि- लेदृश्यैतयाऽकृत्या भवत्येष मलिम्लुचः ॥ ८६ ॥ उत्तिष्ठते जलाद्वह्निरिंदोरंगारवर्षणं । अमृताद्यदि दाहो- ऽपि कार्यमस्मादिदं ततः ॥ ८७ ॥ इदं दिव्यं नरस्यास्य न दातुं देव युज्यते । राज्ञोचे कोऽपि दोषो न दिव्ये दत्तेऽत्र भो जनाः ॥ ८८ ॥ शुद्धानामिह दिव्येन वर्णिका चटति ध्रुवं । सुवर्णस्येव जात्यस्य नि- र्गतस्याग्निमध्यतः ॥ ८९ ॥ पुंरूपा वनिता साथ स्मरंती हृदये तदा । परमेष्ठिमहामंत्रं श्लोकार्थकृतनि- श्चया ॥ ९० ॥ घटमुद्घाट्य जग्राह महासर्पं स्थिराशया । करेण सर्वलोकस्य चमत्कारं विधायिनी ॥९१॥

सर्पोऽपि रज्जुसदृशो भूत्वा तस्थौ तदाननं । संपश्यन् स्नेहभावेन वीक्षितो विस्मितैर्जनैः ॥ ९२ ॥ ततो निःशेषलोकेन शुद्धः शुद्ध इति द्रुतं । जल्पता युगपत्ताला पाणिभ्यां पातितात्मनः ॥ ९३ ॥ तेना- हिना करात्तेन मुखादाकृष्य लीलया । तस्याः कंठे महाहारः स्वमुखेनैव चिक्षिपे ॥ ९४ ॥ राजा लोकश्च सर्वोऽपि विस्मितो हारदर्शनात् । उपलक्ष्य च तं हारं मिथो वक्त्राणि दृष्टवान् ॥ ९५ ॥ अहो किमेतदा- श्चर्यं देवीहारः स एव हि । लक्ष्मीपुंजोऽयमित्यूचे सर्वः कोऽप्यतिविस्मितः ॥ ९६ ॥ लिलिहे पन्नगेनास्य पुंसो भाले स्वजिह्वया । सहसा सोऽभवद्दिव्यरूपा स्त्री तरुणी ततः ॥ ९७ ॥ विस्तार्योपरि तस्याः स्वां

फणीं सर्पेण तस्थुषा । पुंसश्छलधरस्यैकं क्षणं लीलाविडंबिना ॥ ९८ ॥ अपूर्वमिदमाश्चर्यं पश्यद्भिर्नैर्जनै- स्तदा । वक्तुं शशाक नो किंचिदेवमेव स्थितः परः ॥ ९९ ॥ नृनाथोऽपि महाभीत्या कंपमानोऽब्रवीदिदं । मूर्खेणेदं हहा कार्यमयुक्तं विहितं मया ॥ १०० ॥

वारयन्नपि लोकोऽयं देवी चापि न मानिता । उत्थापितो मयाऽनर्थः स्फुटमेष स्वयं ततः ॥ १ ॥ न सामान्यो भुजंगोऽयं सर्परूपेण किंत्वसौ । देवो वा दानवो वापि किंवा शेषः स्वयं ह्ययं ॥ २ ॥ विचित्रशक्तिकौ किंवा कावप्येतौ नरावुभौ । प्रच्छन्नौ केन कार्येण क्रीडतोंतःपुरं किल ॥ ३ ॥ ज्ञायते परमार्थो नाधुना तत्किं करोम्यहं । आराधयामि भक्त्येमौ भक्तिग्राह्या हि देवताः ॥ ४ ॥ उच्चिक्षेपागुरुं भूपः पुष्पाद्यैस्तमपूजयत् । जजल्प च प्रसद्याहिराजं मुंचाशु सुंदरि ॥ ५ ॥ भगवन्नहिराज त्वं मया दूनोऽस्यनेकधा । तत्प्रसद्य त्वया सर्वः सोढव्यो दुर्नयो मम ॥ ६ ॥ तया मुक्तोऽथ सर्पः स रमण्याशु करांबुजात् । राजा च ढोकयामास पुरस्तस्य पयो द्रुतं ॥ ७ ॥ पायं पायं च तद्दुग्धं यावत्सौहित्यमाप सः । राज्ञा तावत्समादिष्टास्त एवेत्यहिचंडिकाः ॥ ८ ॥ अहो एष महासर्प आनीतः स्थानकाद्यतः । गृहीत्वा तत्र युष्माभिर्मोक्तव्योऽतिप्रयत्नतः ॥ ९ ॥ यदि स्तोकापि पीडास्य नागराजस्य निर्मिता । ततो युष्मानहं

सर्वान् हनिष्यामि स्वयं ननु ॥ १० ॥ तथेत्युक्त्वाऽहिमादाय मुक्त्वा तत्र सुखेन ते । पुनरागत्य भूपाया- ऽशंसन् राजनरैः सह ॥ ११ ॥ अथोचे सा नृपेण त्वं पुंरूपाभूः शुभेऽधुना । अस्माकं पश्यतामेव संजाता युवती स्फुटं ॥ १२ ॥ परमार्थः क ईदृक्षः कासि त्वं वररूपभाक् । सत्यमाख्याहि नः सर्वं येन स्याच्चित्त- निर्वृतिः ॥१३॥ दध्यौ साग्रेऽपि संजातं रूपं स्वाभाविकं मम । निष्ठ्यूतेन कुमारस्य भालदेशनिवेशनात् ॥ १४ ॥ अधुना त्वहिजिह्वाया लेहनेन बभूव तत् । हारोऽप्यर्पित एतेन स किं सर्पोऽभवत्ततः ॥ १५ ॥ न त्वेतद्घटते सम्यक् परमार्थं च न वेद्म्यहं । घटते यावदेवात्र तावदेव वदामि च ॥ १६ ॥

इदं जगाद सा बाला लज्जानम्रमुखी ततः । एतावदेव जानामि नान्यत्किंचिन्नरेश्वर ॥ १७ ॥ अहं चंद्रावतीस्वामिश्रीवीरधवलात्मजा । अतीवेष्टा पितुर्देव नाम्ना मलयसुंदरी ॥ १८ ॥ बभाषे भूपतिर्नाहो युक्तियुक्तमिदं वचः । यतोऽन्यत्पूर्वं व्याख्यायि नररूपस्यैतया ॥ १९ ॥ चंद्रावती पुरी क्वास्ते श्रीवीरध- वलस्य सा । क्व चेदं पृथिवीस्थानमेषा क्वैकाकिनी पुनः ॥ २० ॥ भविष्यति कुतोऽप्यस्य वृत्तांतस्य प्रका- शनं । एषापि यदि सत्यास्ति नार्येव वरवर्णिनी ॥ २१ ॥ आगमिष्यति शीघ्रं तत्कोऽप्यस्याः पृष्ठतो ननु । सत्कृत्यैतां तदा तस्मै दास्यामो दिव्यकामिनीं ॥ २२ ॥ देवि त्वं सह हारेण लक्ष्मीपुंजेन सांप्रतं । सुखे-

नेतां धर स्वीयपार्श्वे चारुलल्लोचनां ॥ २३ ॥ हारोऽपि चटितो देवि मध्ये पंचाह्न एव ते । सुखी दुःख्य-
था क्वापि सुतोऽभूत्सत्यसंगरः ॥ २४ ॥ मोक्तव्योऽध्यवसायस्तन्मरणस्य त्वयाधुना । हाराऽप्राप्तौ कुमर-
णमंगीकृतमभूयतः ॥ २५ ॥

देव्युवाच महाराज किमनेन करोम्यहं । हारेण जीवितं धर्त्तुं न शक्नोमि विनात्मजं ॥ २६ ॥ हा
मया मूढया तादृक् पुत्ररत्नं महापदि । अस्य हारस्य कार्येण पातितं दुर्लभं पुनः ॥ २७ ॥ रत्नं पाषाण-
कार्येण सुधा पानीयहेतवे । कल्पवृक्षश्च निंबार्थं देव निर्गमितो मया ॥ २८ ॥ जीवित्वा किं करिष्यामि
तन्निर्भाग्यशिरोमणिः । देव प्रेषय मां येन भृगुपातं तनोम्यहं ॥ २९ ॥ राजा जगाद देवि त्वं स्थापिता-
सि पुरा मया । आप्रभातं न वक्तव्यमत्रार्थे किमपि त्वया ॥ ३० ॥ तावद्धारोऽपि लब्धोऽयमतर्कित इहा-
धुना । समेष्यति कुमारोऽपि पुण्यैरेवं कुतोऽपि नः ॥ ३१ ॥ संधीर्येति प्रियां राजा ययौ निजनिकेतनं
। स्वं स्वं स्थानं समस्तोऽपि जनो विस्मितमानसः ॥ ३२ ॥ देव्या समं गतावासं सा स्त्री मलयसुंदरी ।
कारिता भोजनादीनि कृत्यान्यगमयद्दिनं ॥ ३३ ॥ देव्या सह महीपोऽपि कुमारविरहार्दितः । दिनशेषं
निशां चापि तां कृच्छ्रेणात्यवाहयत् ॥ ३४ ॥ प्रेषिताः शुद्धिकार्येण प्रातरागत्य ते नराः । सर्वेऽप्यूचुः कु-

मारस्य शुद्धिर्नाप्ता प्रभो क्वचित् ॥ ३५ ॥ निराशौ तौ ततो राजा राज्ञी च द्वावपि द्रुतं । जग्मतुर्गिरिपादांतं यावन्मरणहेतवे ॥ ३६ ॥ तावत्तत्र समागत्य केऽपि वास्तव्यपूरुषाः । श्वासपूर्णमुखा भूमीपालमेवं व्यजिज्ञपन् ॥ ३७ ॥

धनंजयस्य यक्षस्य पार्श्वे गोलानदीतटे । यत्रोद्बद्धोऽस्ति चौरः स लोभसारो वटद्रुमे ॥ ३८ ॥ तत्रैवातिदृढस्थूलशाखायुग्मस्य मध्यतः । निक्षिप्तांह्रियुगश्चोर्ध्वपादश्चाधोमुखस्तथा ॥ ३९ ॥ बहुदुःखभराक्रांतो वल्गुल्याः कलयन् कलां । चौरास्तोकांतरेऽदर्शि कुमारोऽस्माभिराद्दतैः ॥ ४० ॥ त्रिभिर्विशेषकं ॥ परमार्थं वयं नान्यं जानीमः किमपि प्रभो । यथादृष्टं तथा देवपादानामिह भाषितं ॥ ४१ ॥ इत्याकर्ण्य नृपो देवीयुक्तः सिक्त इवामृतैः । अन्वभूद्विस्मयानंदरसौ द्वौ युगपत्तदा ॥ ४२ ॥ त्यक्त्वा सर्वं ततो वेगाद्भृगुपातक्रियोद्यमं । महाबलकुमारस्य दर्शनोत्कंठितो भृशं ॥ ४३ ॥ तयाऽभिनवया नार्या पद्मावत्या च भार्यया । उत्तालं मिलिताशेषलोकेन च समन्वितः ॥ ४४ ॥ चित्ते तं वटमाधाय प्रस्थितो भूपतिर्द्रुतं । अपश्यच्च यथाख्यातं कुमारं तं तथास्थितं ॥ ४५ ॥ त्रिभिर्विशेषकं ॥ मुंचन्नश्रूणि लोकेन सार्द्धं राजा जगाविति । हा वत्स स्वच्छचित्तेपा दुःखावस्था कथं तव ॥ ४६ ॥ तिष्टत्येकत्र चौरोऽयं लंबमानो

वटद्रुमे । वत्स त्वमीदृशं दुःखमन्यतोऽनुभवन्पुनः ॥ ४७ ॥ धिग् धिग् राज्यमिदं सर्वं धिग्मे दोर्दंडविक्रमं । यदेषा ते समायासीन्महती विपदीदृशी ॥ ४८ ॥ जल्पन्निति महीपाल आह्वाय्याह्वाय वर्द्धकिं । छेदयित्वा च शाखे ते सुखेनाकर्षयत्सुतं ॥ ४९ ॥ पीडाभरसमाक्रांतमक्षमं वक्तुमप्यमुं । महाबलं सुतं वीक्ष्य विह्वलं घूर्णितेक्षणं ॥ ५० ॥ शीतलं कारयामास वातं भूपः स्वसेवकैः । अंगं संवाहयामास कदलीदलकोमलं ॥ ५१ ॥ युग्मं ॥

समुन्मीलितनेत्रोऽथ विस्फुरच्चारुचेतनः । पद्मावत्या जनन्येति सादरं भाषितः सुतः ॥ ५२ ॥ हा वत्स दुर्लभालोक मया त्वं हीनसत्वया । हारालोकनकार्येण समादिष्टस्तदाज्ञया ॥ ५३ ॥ क्व गतस्त्वं स्थितः कुत्रानुभूतं किं किमु त्वया । कुमारैषा कथं जाता दुःस्थावस्था तवापि च ॥ ५४ ॥ राजोचे कथयास्माकं चित्तं वत्स समुत्सुकं । नालं कालविलंबाय गर्जिते शिखिनाब्ववत् ॥ ५५ ॥ क्षिपन् सर्वत्र नेत्राणि विशेषेण नरस्त्रियां । कुमारः स्माह वृत्तांतमनुभूतं ततो निजं ॥ ५६ ॥ मध्ये सौधं यथाऽयातः करस्तेन हृतो यथा । इत्यादि पुनरेवात्र रंभोद्यानागमावधि ॥ ५७ ॥ तथैव सर्वमाख्याय कुमारः पुनरब्रवीत् । मुक्त्वा युष्मद्वधूं तत्रागां ताताहमनुस्वरं ॥ ५८ ॥ युग्मं ॥ इतश्च कृतनीरंगीसावधानां प्रियांप्रति ।

क्षिपन्नेत्रे जगादेप कुमारः शृणुताग्रतः ॥ ५९ ॥ गच्छताथ मया दृष्टो मंत्रं कमपि साधयन् । एकाक्येव महायोगी सज्जितोपस्करो वने ॥ ६० ॥

मद्दर्शनेन मुक्त्वाशु सर्वं व्यापारमात्मनः । अहमभ्यर्थितस्तेन कृताभ्युत्थानकर्मणा ॥ ६१ ॥ अहो कुमार वीरेन्द्र परोपकृतिकर्मठ । त्वमद्यात्राऽसहायस्य संप्राप्तः सुकृतैर्मम ॥ ६२ ॥ अयं येन महामंत्रः प्रारब्धोऽस्ति प्रसाधितुं । सिद्धे मंत्रेऽत्र कनकपुरुषः सेत्स्यति ध्रुवं ॥ ६३ ॥ सामग्रीयं मया सर्वा मेलितास्ति कुमार वै । एक एव परं नास्ति नर उत्तरसाधकः ॥ ६४ ॥ क्षणमेकं ततस्तिष्ठ त्वं भवोत्तरसाधकः । साहाय्येनैव मंत्रस्ते मम शीघ्रं हि सेत्स्यति ॥ ६५ ॥ अंगीकृत्य वचस्तस्य देवाहं दयया स्थितः । खड्गमादाय वेगेन भूत्वा चोत्तरसाधकः ॥ ६६ ॥

योगिनोक्तमथो वीर नार्येपा यत्र रोदिति । वटे तत्राक्षतांगोऽस्ति शाखाबद्धो मलिम्लुचः ॥ ६७ ॥ गृहीत्वा तं कुमारात्रानय चौरं सलक्षणं । तेनेत्युक्तेऽसिना सार्द्धं यावत्तत्राहमीयिवान् । ६८ ॥ तावन्न्यग्रोधशाखायां बद्धदस्योरधोभुवि । उपविष्टा मया दृष्टा रुदत्येका वरा वशा ॥ ६९ ॥ आभाषिता च कासि त्वं करुणं किं च रोदिपि । एकाकिनी श्मशानेऽत्र किं रात्रौ भीषणे भृशं ॥ ७० ॥ सहसा मुखमुद्घाट्य

पश्यंती संमुखं मम । दृष्ट्या निश्चलया साथ वक्तुमेवं प्रचक्रमे ॥ ७१ ॥ हंहो सत्पुरुषाहं किं मंदभाग्या वदामि ते । उद्बद्धो वटशाखायां यः पुमानत्र विद्यते ॥ ७२ ॥ स एष लोभसाराख्य ऋद्धो मुषितनागरः । अज्ञातस्थानकोऽलंबगिरिवासी मलिम्लुचः ॥ ७३ ॥ तृतीयेऽद्यतनस्याह्नो यामे राजनरैः कथंचित् । लब्ध एष नृपेणाथ सायमेवं च घातितः ॥ ७४ ॥ एतस्याहं प्रियाभीष्टा दुःखिता तेन रोदिमि । प्रत्यूपेऽद्यैव संजात आवयोरिह संगमः ॥ ७५ ॥ परं स्नेहः स कोऽप्यद्यानेन प्रौढः प्रकाशितः । खाटूकुर्वन्नपि यश्चित्ते गदितुं शक्यते न हि ॥ ७६ ॥ तथा कथं विधेहि त्वमेकाश्लेषं ददाम्यहं । मुखं चास्य विलिंपामि चंदनेन यथा सुधीः ॥ ७७ ॥

तयेत्युक्ते मया देव कथितं कृपया तदा । भद्रे स्कंधं ममारुह्य यथेष्टं त्वं समाचर ॥ ७८ ॥ समुत्प्लुत्य मम स्कंधमारूढा सहसाथ सा । शवस्योत्कंठिता कंठं यावदालिंगति प्रभो ॥ ७९ ॥ तावत्तेन शवेनास्या दंतैरात्ताशु नाशिका । रसंती विरसं भूरि लग्ना सा कंपितुं ततः ॥ ८० ॥ गाढात्तायानसस्तस्याः कर्षंत्यास्त्रुटितस्तदा । अग्रभागः शवस्यास्य मुखमध्ये स्थितः किल ॥ ८१ ॥ ममेदं पश्यतो हास्यं स्फुटित्वास्यं समागतं । प्रजल्पितं ततस्तेन शवेन हसता मनाक् ॥ ८२ ॥ ममेदं चरितं दृष्ट्वा हससि

ऽभूत्परः साक्षाद्दिव्यरूपा नितंबिनी । इत्यादि देव निखिलं प्रत्यक्षं भवतामपि ॥ २१ ॥ बहुधाराध्य भी-
तेनालंबशैलस्य गह्वरे । तत्रैव मोचितः सर्पः स त्वयेति कथावधि ॥ २२ ॥ युग्मं ॥ नृपोऽथ कथयामास
कथं सोऽभिनवः पुमान् । अस्माकं पश्यतामेव यत्साभूद्दिव्यकामिनी ॥ २३ ॥ कुमारः स्माह देवेह मध्य-
रात्रे तदा मया । संप्राप्तेन श्रुतो दीनः स्वरो नार्याः कुतोऽपि हि ॥ २४ ॥ गच्छतानुस्वरं तत्र मया मुक्ता
वधूस्तव । पुंरूपा कदलीगेहे मद्वस्त्राभरणान्विता ॥२५॥ ततो नवनरस्यास्याऽत्रायातस्य कथंचन । युष्मा-
भिर्घटसर्पस्य दिव्यं दत्तं सुदुष्करं ॥ २६ ॥ युष्माकं भूरिपुण्येन दिव्ये तत्र नरेश्वर । अहमेव सर्परूपो
विधिना ढौकितः किल ॥ २७ ॥

मया करगृहीतेन स सम्यगुपलक्षितः । ततो भालतलं तस्य निष्ठ्यूतेन च मर्दितं ॥ २८ ॥ जज्ञे
युष्मासु पश्यत्सु कामिनी स नरस्ततः । इत्येष परमार्थस्तु वृत्तांतस्यास्य भूपते ॥ २९ ॥ नरेंद्रप्रमुखाः
सर्वे सानंदा दृष्टिमक्षिपन् । नीरंग्याच्छादितांग्या द्राग् वध्वास्तस्या उपर्यथ ॥ ३० ॥ कुमारानुज्ञया साथ
ननाम श्वसुरादिकान् । तेऽपि प्रमुदितास्तस्यै ददुः सर्वे वराशिषः ॥ ३१ ॥ मुंचन्नश्रूणि धुन्वंश्च शिरोऽत्रो-
चन्नृपस्ततः । अहो मया समाचेरे स्ववध्वां शात्रवोचितं ॥ ३२ ॥ जनो जगाद हे देव कार्यः खेदोऽत्र

न त्वया । अपराध्यति येनैकमज्ञानं नापरं पुनः ॥ ३३ ॥ पद्मावत्या महादेव्या स्वोत्संगे सा वधूर्धृता । भणिता च त्वया वत्से कथं नात्मा प्रकाशितः ॥ ३४ ॥ अथवाऽकारि हे वत्से युक्तं मौनं त्वया यतः । मन्येताघटमानं कः कथ्यमानमपि त्वया ॥ ३५ ॥ अहो अज्ञैस्तवास्माभिः कीदृशं विहितं सुते । अभविष्यदनिष्टं चेत्किंचित्तस्यो गतिश्च का ॥ ३७ ॥

अस्माकं कानिचिन्नूनं पुण्यान्यद्यापि जाग्रति । संजातं ते शुभोदर्कं यतः कष्टमपीदृशं ॥ ३८ ॥ ततोऽस्माकमयं मंतुः क्षंतव्यस्तनये त्वया । परमार्थविदो येन भवंति हि कुलोद्भवाः ॥ ३९ ॥ धन्या वत्से वयं सर्वमस्माकं सफलं तथा । आत्माप्युद्धूयमानोऽयं सुखमग्नः स्थितोऽद्य वै ॥ ४० ॥ यत्त्वया गुणशालिन्या विपिनोदुरया तथा । वध्वा सह समायातः कुमारः सत्यसंगरः ॥ ४१ ॥ अथो मलयसुंदर्यै देवी पद्मावती ददौ । स्वहस्तेनैव दिव्यानि वस्त्राण्याभरणानि च ॥ ४२ ॥ सत्कुर्वंती प्रशंसंती वहुधेति वधूं निजां । यावत्तस्थौ महादेवी तावद्भूपोऽवदत्सुतं ॥ ४३ ॥ त्वया वत्स विमुक्तेनाऽलंबशैलस्य कंदरे । अहिरूपधरेणानुभूतं किं किं महाबल ॥ ४४ ॥

कुमारः स्माह तत्रैव स्थितेन गमितं मया । दिनशेषं सुखेनैव पवनाहारकारिणा ॥ ४५ ॥ संध्यायां

योगिना तेन तत्रायातेन गह्वरे । मम भालं पुनः स्वामिन्नर्कक्षीरेण घर्षितं ॥ ४६ ॥ सजज्ञेऽहं पुनर्देव नैसर्गिकवपुः पुमान् । तेनोक्तश्च कुमारैष महामंत्रश्च साध्यते ॥ ४७ ॥ पार्श्वे ज्वलनकुंडस्य द्वावप्यावां गतौ ततः । योगिनोक्तं महावीर पुनरानय तं शवं ॥ ४८ ॥ अत्रागत्य तथैवाथ गृहीत्वा तच्छवं पुनः । समर्पितं मया तस्मै योगिने मंत्रसिद्धये ॥ ४९ ॥ स्नपयित्वा च तत्तेन स्थापितं मंडलांतरा । प्रज्ज्वालितोऽनलश्चाहं कृतश्चोत्तरसाधकः ॥ ५० ॥ यथा यथा जजापैष योगी मंत्रं तथा तथा । उत्तस्थौ मृतकं तत्र निपपात पुनः पुनः ॥ ५१ ॥ अर्द्धरात्रौ ययौ तस्य जापमेवं वितन्वतः । ततो डमरुकध्वानाः श्रूयंतेस्म विहायसि ॥ ५२ ॥ कुशुद्धं मृतकं ह्येतत् पुरुषो रे न सेत्स्यति । जल्पंतीत्यवतीर्णाभ्राद्देवता कुपिता तदा ॥ ॥ ५३ ॥ तया देवतया योगी केशग्राहं स साधकः । उल्लाल्य चिक्षिपे मध्ये ज्वलज्ज्वलनकुंडके ॥ ५४ ॥ तद् दृष्ट्वाहं दृढांगोऽपि क्षुब्धः किंचन मानसे । अतस्तया निबद्धौ मे हस्तौ पन्नगपाशकैः ॥ ५५ ॥ कुमारं सुंदराकारं क एनं मारयिष्यति । जल्पंतीति ययौ व्योम्नि । सा मां धृत्वाशु पादयोः ॥ ५६ ॥

शाखायुग्मस्य मध्येऽत्र क्षिप्त्वांह्वियुगलं मम । गता सा देवता शीघ्रं लंबमानः स्थितस्त्वहं ॥ ५७ ॥ अत्रेदं मृतकं चापि तथैवागत्य तस्थिवत् । ईक्षांबभूवुस्ततस्सर्वे वालयित्वाथ कंधरां ॥ ५८ ॥ उचुश्चाक्षत-

सर्वांगं कुशुद्धं मृतकं कथं । ततोऽवदन्नृपः शीर्षं धुन्वन् किंचिद्विषितयन् ॥ ५९ ॥ अहो यत् त्रोटिकं दंतैः मीनासाग्रं किलामुना । भविष्यत्यास्यमध्ये तत् कुशुद्धं तेन नन्विदं ॥ ६० ॥ शिरः सर्वेऽपि धुन्वंतो जल्पंतिस्म नृपंप्रति । एवमेव नरेंद्रेदं नान्यथा ते वरा मतिः ॥ ६१ ॥ राजापि वीक्षयामास तन्मुखं निजपुरुषैः । नासाग्रे वीक्षिते तत्र सर्वेषां प्रत्ययोऽभवत् ॥ ६२ ॥ सखेदो राजसूराख्यन्नैतद् ज्ञातं मयापि हा । महद्विनाशितं कार्यं योगिनः कथितं न यत् ॥ ६३ ॥ राजोचे वत्स मा खेदं कार्षीस्त्वं हृदये वद । नागबंधः कथं नष्टः स दृढो भुजयोस्तव ॥ ६४ ॥ कुमारः स्माह देवाऽहिपुच्छं लग्नं तु लंबितुं । इतस्ततश्चलद्दैवयोगादागान्मुखे मम ॥ ६५ ॥

रोषेणाथ मया तच्च दशनैश्चर्वितं मुहुः । पीडितः पन्नगः सोऽथ बंधादुच्चलितः क्षणात् ॥ ६६ ॥ पतितश्च महीपीठे न लग्नः क्वापि मे तनौ । विषापहारिमंत्राणामोषधेश्च प्रभावतः ॥ ६७ ॥ मया निर्गमितं रात्रियामयुग्मं कथंचन । पुनः संप्रति युष्माभिरापदेषा हता मम ॥ ६८ ॥ यदेतेन शबेनोक्तं संमुखं मे भयंकरं । अद्यैव देव संजातं सत्यं तद्वचनं पुनः ॥ ६९ ॥ मया तदेष सर्वोऽपि वृत्तांतः कथितोऽधुना । ममानुभूतः कायेन धृत्वा मनसि धीरतां ॥ ७० ॥ शक्यते यन्न गदितुं न श्रद्धातुं च केनचित् । कथ्य-

मानं च वहुधा चित्ते माति न कस्यचित् ॥ ७१ ॥ एवंविधस्य कार्यस्य यासि पारं त्वमेव हि । धुर्य एव वहेद्भारं विषमे न तु वर्णकः ॥ ७३ ॥ अहो ते साहसं बुद्धिर्निर्भयत्वं सुधीरता । महापरोपकारित्वं कारुण्यं दक्षतापि च ॥७४॥ अहो सुकृतसंभारः कुमार प्राक्तनस्तव । येनाप्तैवंविधा भार्याऽस्माकं च मिलितोऽचिरात् ॥ ७५ ॥ सर्वेष्वेवं प्रशंसत्सु कुमारं तमनेकधा । नृपोऽवोचत्कुमार त्वं तत्स्थानं दर्शयास्मकान् ॥ ७६ ॥ युवाभ्यां यत्र मंत्रः स प्रारेभे साधितुं निशि । कथं वभूव योगी स गत्वा तत्र विलोक्यते ॥ ७७ ॥ अनुयातस्ततः सर्वैस्तदोत्थाय स भूपभूः । गत्वा तद्दर्शयामास मंत्रसाधनमंडलं ॥ ७८ ॥ यावत्सर्वेऽपि ते तत्र लग्नाः सर्वत्र वीक्षितुं । तावन्मध्येऽग्निकुंडस्याऽपश्यन्कांचनपूरुषं ॥ ७९ ॥ कर्षयित्वाथ तं राजा कोशे चिक्षेप पूरुषं । पुनर्भवंति छिन्नानि तस्यांगानि विना शिरः ॥८०॥ सकुटुंबोऽथ भूपालः संप्राप्तो निजमंदिरं । दशाहानि पुरे तत्र वर्द्धापनमकारयत् ॥ ८१ ॥

अथो मलयकेतुः स प्रस्थितोऽनुवधूवरं । शुद्धिं सर्वत्र कुर्वाणस्तस्य तत्र समागमत् ॥ ८२ ॥ मिलित्वा भूपतेरुक्तं तेनागमनकारणं । राज्ञापि मेलितः सोऽथ स्वसुः स्वसृपतेरपि ॥ ८३ ॥ ताभ्यामपि प्रहृष्टाभ्यां पित्रोः पृष्टोंगमंगलं । सर्वं जगाद तद्दुःखमाविष्कुर्वन्नयं ततः ॥ ८४॥ पृष्टौ तेनापि तौ मूलाद्वृत्तांतं तं

निजं निजं। कथयामासतुः सर्वमनुभूतं यथा यथा ॥८५॥ कुमारो मलयात्केतुः शिरो धुन्वन् जगाविति। अनुभूतमहो दुःखं युवाभ्यां कथमीदृशं ॥८६॥ इत्थं परस्परप्रीतिवार्त्तारसवशंवदाः। ते सर्वेऽपि क्षुधां तृष्णां निद्रां चान्वभवन्न हि ॥ ८७ ॥ राज्ञा मलयकेतुः स कुमारः सत्कृतो भृशं। स्नानभोजनवस्त्राद्यैः स्वसुः स्नेहेन तस्थिवान् ॥ ८८ ॥ कतिचिद्दिनपर्यंते तेनोक्तं भूपतिंप्रति। मां प्रेषय नराधीशाधुना यामि निजं पुरं ॥ ८९ ॥ जामातृसुतयोर्येन चिंतयंतावमंगलं। दुःखेन गमयंतौ च कालं मे पितरौ स्थितौ ॥ ९० ॥

गत्वादेशेन युष्माकमहं वर्द्धापयामि तौ। विद्धामि तथा प्रत्युज्जीवितानंदिमानसौ ॥ ९१ ॥ अन्यथा दुःखनिर्मग्नौ नूनमेतौ मरिष्यतः। प्राणेभ्योऽपि तयोर्यस्मादेषाभीष्टा सुताधिकं ॥ ९२॥ श्रुत्वेति भूपतिः स्माह प्रहितुमसहोऽपि तं। यद्येवं वत्स तद्गच्छ वदामो नैव किंचन ॥ ९३ ॥ अग्रेऽप्यस्त्यावयोः प्रीति-वल्ली संबंधवारिणा। सिक्तानेनाधुना वाच्यं पितुरित्यात्मनस्त्वया ॥ ९४ ॥ महाबलं स्वसारं चापप्रच्छे मल-यस्ततः। गमनायाऽसुखं पित्रोराविष्कुर्वंस्तयोः पुरः ॥ ९५ ॥ महाबलो जगादेति वाच्यं स्वसुरयोर्मम। कुमार सारसौजन्य नमस्कारपुरस्सरं ॥९६॥ अनाख्याय स्ववृत्तांतं कन्यामादाय गच्छता। महाबलेन चौरेण यद्दुःखं युवयोः कृतं ॥ ९७ ॥ युवाभ्यां मम निःशेषमागः क्षंतव्यमेव तत्। उत्पाट्याहं समानीतस्ततः

नरिनं

परवशो यतः ॥९८॥ ऊचे मलयसुंदर्या भ्रातरागमनादिकं। त्वयांबा तातपादानां विज्ञप्यं सर्वमप्यदः ॥९९॥ चिंता कापि न कर्तव्या सुखेन च स्थितास्म्यहं। इति च भ्रातराख्येयं गंतव्यं पथि सुष्टु च ॥ ३०० ॥ कुमारो मलयः सोऽपि सर्वमभ्युपगत्य तत्। विमुंचन्मोचयंश्चापि बाष्पांबु प्रस्थितः पथि ॥ १ ॥ पुरीं चंद्रावतीं प्राप्य निर्विलंबप्रयाणकैः। सुताजामातृलाभोक्त्या स पित्रोरकरोन्मुदं ॥ २ ॥ तयोर्वृत्तांतमाकर्ण्य कुमारात्स नरेश्वरः। नित्यमानंदितस्तस्थौ महादेव्या समं ततः ॥ ३ ॥ महाबलस्य तत्राथ भुंजानस्य महासुखं। सार्द्धं मलयसुंदर्या ययौ कालः कियानपि ॥ ४ ॥ अथान्यदा तयोर्गेहगवाक्षांकोपविष्टयोः। दंपत्योश्छिन्ननासा सा नारी द्वारमुपागता ॥ ५ ॥ महाबलेन तां दृष्ट्वा जगदे वल्लभांप्रति। सैषा यस्याः स्वरं श्रुत्वाऽनुयातोऽहं प्रिये तदा ॥ ६ ॥ ततो मलयसुंदर्या स्थिरदृष्ट्या निरीक्ष्य तां। उपलक्ष्यांगचिह्नैश्च प्रोचे विस्मितचेतसा ॥ ७ ॥ नूनं कनकवत्येषा सैवावाभ्यां तदा प्रियः। मंजूषांतः स्थिता नद्याः प्रवाहे या प्रवाहिता ॥ ८ ॥ गुह्यं वक्ष्यति किंचिन्न लज्जयैषोपलक्ष्य मां। अपट्यन्तः शृणोम्यत्र तदहं युष्मदाज्ञया ॥ ९ ॥ प्रियादेशेन तस्थुष्यां तस्यां कांडपटांतरे। प्रविष्टा तत्र सा नारी प्रतीहारनिवेदिता ॥ १० ॥ पृष्टा साथ कुमारेण प्रतिपत्तिपुरस्सरं। सम्यक् सर्वं समाख्याहि शुभे त्वं चरितं निजं ॥ ११ ॥

सा जगाद कुमारेंद्र चंद्रावत्याः पुरः प्रभोः । भार्या वीरधवलस्य नाम्ना कनकवत्यहं ॥ १२ ॥ चुकोप भूपतिर्मह्यमेवमेवान्यदा ततः । त्यक्त्वा सर्वमहं कोपान्निर्गता राजवेश्मतः ॥ १३ ॥ मिलितो मे पुमानेको दक्षो वैदेशिको युवा । तेन संकेतिता गोलानद्यां देवीगृहे त्वहं ॥१४॥ तस्याहं मिलिता तत्र गत्वा रात्रौ कथंचन । धूर्तेनोक्तं ततस्तेन चौराः संत्यत्र मा वद ॥ १५ ॥ गृहीत्वा तेन मत्पार्श्वात्सर्वं वस्त्रादि भाषितं। भद्रे प्रविश मंजूषां यावद्गच्छंति तस्कराः ॥१६॥ प्रविष्टा तत्र भीताहं तेनापि मम कंचुकं। हारं चादाय शेषं तु मंजूषायां प्रचिक्षिपे ॥ १७ ॥ मंजूषाया मुखं तेन पापेन पिहितं द्रुतं । संकेतितो द्वितीयोऽथ कोऽपि तत्र समागतः ॥१८॥ ताभ्यामुत्पाट्य मंजूषा द्वाभ्यां गोलानदीरये । मुक्ता तरीतुमारब्धा तरीतुं ततः ॥ १९ ॥ कुमारेण ततोऽभाणि त्वं ताभ्यां किमु सुंदरि । अज्ञाताभ्यां नदीवाहे पेटांतःस्था प्रवाहिता ॥ २० ॥ अभिज्ञास्ति तयोः काचित् किंचिज्जानासि कारणं । सा प्रोवाच ममाज्ञातौ तौ निष्कारणवैरिणौ ॥ २१ ॥ अनिमित्तमहो चक्रे ताभ्यां तदसमंजसं । इति जल्पन् शिरःकंपं कुमारः कृतवान्मुहुः ।२२।

जगादाथ पुरो ब्रूहि मंजूषा कुत्र सा गता । सा स्माह रजनीप्रांते कुमारात्र समागता ॥ २३ ॥ धनंजयस्य यक्षस्यासन्नगोलानदीतटे । प्रासाकृष्य बहिश्चक्रे लोभसारेण दस्युना ॥ २४ ॥ भंक्त्वा तालक-

मुद्घाट्य द्वारं यावद्विलोकितं । तावद् दृष्टा गृहीता च तेनाहं वस्त्रसंयुता ॥ २५ ॥ नीत्वाऽलंबगिरौ तेन विषमे क्वापि कंदरे । एकत्र दर्शयांचक्रे गुप्तं मे निजमंदिरं ॥ २६ ॥ पुरलक्ष्मीः समस्तापि नीत्वा क्षिप्ता-स्ति तत्र या । दर्शिता सापि मे तेन बहुमानपुरस्सरं ॥ २७ ॥ नामादि कथितं सर्वं मिथः स्नेहेन तेन तु । तथा व्यवहृतं चित्तं यथा मे तत्र संस्थितं ॥ २८ ॥ स्थित्वा यामयुगं सोऽत्रागतः कार्येण केनचित् । प्रापि क्वापि नरेंद्रेण हताशः पश्यतोहरः ॥ २९ ॥ राज्ञा गोलातटेऽलंबशैलमूलेऽथ तस्करः । सायमुद्-बंधयांचक्रे तत्र न्यग्रोधपादपे ॥ ३० ॥ मया दृष्टोऽद्रिशृंगाग्रस्थितया स ततो निशि । गताहं तत्र शोकेन रुदती मिलिता च ते ॥ ३१ ॥ अतः परं च यज्जातं तत्र तत्प्रकटं तव । इत्येष मम निःशेषो वृत्तांतो राजनंदन ॥ ३२ ॥ गृहाण द्रविणं तत्त्वं स्थानं तद्दर्शयाम्यहं । अथाचख्यौ तया सार्द्धं गत्वा राज्ञेऽखिलं स तत् ॥ ३३ ॥ पुरस्कृत्याथ तां भूपो गत्वा तत्र च सत्वरं । यस्य यद्वस्तु तत्राभूत्तस्मै सर्वं तदार्पयत् ॥ ॥ ३४ ॥ प्रभूतं शेषमादाय द्रविणं स पुरं ययौ । पुष्टकोशोऽभवत्तेन द्रव्येण पुरुषेण च ॥ ३५ ॥ राजदत्तो-चितद्रव्या नारी सा छिन्ननासिका । कुमारेण समं यावत्कुमारावासमाययौ ॥ ३६ ॥

तत्र तावदपश्यत् सा बालां मलयसुंदरीं । लक्ष्मीपुंजेन हारेण भूषितां ह्यतर्कितां ॥ ३७ ॥ चम-

क्ताथ सा दध्यौ दुष्टैषा जीविता कथं। कथं च निःसृता कूपात्परिणीतामुना कथं ॥ ३८ ॥ प्रष्टुकामापि नापृच्छत् किंचित्तत्रेति सा वशा। यदेषोक्त्वा चरित्रं मे सर्वं प्रकटयिष्यति ॥ ३९ ॥ लक्ष्मीपुंजोऽपि हारोऽयमानीयास्यै समर्पितः। पापायै मम वैरिभ्यां ताभ्यां काभ्यामपि द्रुतं ॥ ४० ॥ न ज्ञायतेऽथवैताभ्यामेवैष मम पार्श्वतः। हारः केनाप्युपायेन तदाग्राहि नदीतटे ॥ ४१ ॥ तन्नूनं वैरिणावेतौ मम दुष्टावुभावपि। ध्यायंतीमिती तामेवमूचे मलयसुंदरी ॥ ४२ ॥ अनश्रेयं कुतो वृष्टिस्त्वमंबैकाकिनी कथं। दुःस्थावस्था कथं युष्मन्नासाया इयमीक्ष्यते ॥ ४३ ॥

इतश्चोक्तं कुमारेण प्रष्टव्यं न प्रिये त्वया। ज्ञातमस्ति मया सर्वं कथयिष्याम्यहं तव ॥४४॥ अलं कालविलंबेन त्वं याहीत्यनुगम्य तां। कुमारः कनकवतीं गृहं शून्यमदीदृशत् ॥ ४५ ॥ चित्ते दुष्टा मुखे मिष्टा स्थिता सा तत्र नित्यशः। पार्श्वे मलयसुंदर्या आजगामापनासिका ॥ ४६ ॥ तथाजल्पत्तथा तस्थौ तथा वार्त्ताश्चकार सा। यथा प्रत्येति धूर्त्तां तां विश्वस्ता भूपभूप्रिया ॥ ४७ ॥ एवं मलयसुंदर्याः पश्यंती छिद्रसंततिं। कालं निर्गमयामास सा निष्कारणवैरिणी ॥ ४८ ॥ अथो मलयसुंदर्या भुंजानाया निरंतरं। सुखं वैषयिकं तत्राऽभवद्गर्भस्य संभवः ॥ ४९ ॥ ततस्तस्याः सुखेनैव काले गच्छति लीलया। पूर्यमाणासु

सर्वासु वांछासु नृपसूनुना ॥ ५० ॥ मनोरथेषु सर्वेषु वर्द्धमानेषु नित्यशः । तस्या लावण्यपूर्णाया वेलामासः समागमत् ॥ ५१ ॥ युग्मं ॥ अत्रांतरे नरेंद्रेण कुमारः स महाबलः । आदिष्टो वत्स गच्छ त्वमुद्भटैः सुभटैर्वृतः ॥ ५२ ॥ उपद्रवंतमात्मीयदेशं दुर्गस्थितं सदा । पल्लीशं क्रूरनामानं निग्रहाणोग्रविग्रहं ॥ ५३ ॥ प्रमाणं तात युष्माकमादेश इति संसदि । जल्पित्वागत्य चाचख्यौ कुमारस्तत्प्रियांप्रति ॥ ५४ ॥

उत्सुका सह यानाय बोधयित्वा कथंचन । सा प्रिया स्थापिता तत्र कुमारेण महौजसा ॥ ५५ ॥ उक्तं च सांप्रतं कांते न युक्तः स्थानचालकः । तवासन्नप्रसूतेस्तत्त्वं तिष्ठात्रैव सुस्थिता ॥ ५६ ॥ तां गदित्वेति बहुधा तया ज्ञातास्ति या पुरा । तां भालचित्रगुटिकामर्पयित्वेति सोऽब्रवीत् ॥ ५७ ॥ तातादेशमहं कृत्वा दिनैः स्तोकतरैस्तव । पुनः शीघ्रं समागत्य मिलिष्येऽहं सुलोचने ॥ ५८ ॥ अथ साश्रूणि मुंचंती निःश्वसंत्यतिमंदवाक् । अनुमेने तमेतव्यं पुनराश्विति वादिनी ॥ ५९ ॥ रुद्धकंठः कुमारोऽपि पश्चाद्ग्रीवं पुनः पुनः । पश्यंस्तां जनकादेशाद्गलिताश्रुर्विनिर्ययौ ॥ ६१ ॥ तत्कालमिलिताशेषसारसैन्यसमन्वितः । क्रूरं साधयितुं भिल्लाधीशं राजसुतो ययौ ॥६२॥ सा कनकवती पश्चात्पश्यंती छलमन्वहं । दध्यावेकाकिनी जाताऽधुनैषा सुकृतैर्मम ॥ ६३ ॥ किंचित्संकल्प्य कूटं सा सुंदर्या गृहमागता । समुद्विग्नामपश्यत्तां न्यस्ता-

स्यां पाणिपंकजे ॥ ६४ ॥ तथा वार्त्ताश्चकारैषा कथाश्चाकथयत्तथा । सुखेनामगयद् घस्रं यथा मलयसुं-
दरी ॥ ६५ ॥ तयाऽभाण्यथ हे अंब त्वं तिष्ठात्रैव निश्यपि। सुखेनैव निशा येन याति मे वचनैस्तव ॥६६॥
शर्करा पतिता दुग्धे च्युत्वा हस्ततलादहो । चिंतयंतीति हृष्टा सा वचस्तस्या अमन्यत ॥ ६७ ॥

यथा दिनं तथा तस्या गता रात्रिरपि प्रगे । तया कनकवत्योक्तमेवं कपटपूर्णया ॥ ६८ ॥ उपद्रो-
तुमत्र त्वां भ्रमंती राक्षसी निशि। दृष्टैका प्रतिजघ्ने च जाग्रत्या तनये मया ॥ ६९ ॥ ततो यदि त्वमा-
ख्यासि भूत्वाहं तादृशी ततः । तथा तां विदधाम्यत्र पुनर्नायाति सा यथा ॥७०॥ न श्रुतं किं त्वया संति
रक्षसामपि भेषजाः । ततो मलयसुंदर्या मुग्धया मानितं तथा ॥ ७१ ॥ तस्मिंश्च समये तत्र नगरे मार्यु-
पद्रवं । ज्ञात्वा दुष्टा गता छिन्ननासा सा राजसन्निधौ ॥७२॥ याचित्वैकांतमाभाषि तया भूपश्छलज्ञया ।
तवाख्यामि हितं स्वामिन् यदि त्वं मे प्रसीदसि ॥ ७३ ॥ दत्वाभयं ततो राज्ञा सादरं भणिता वद । सावो-
चन्नृप युष्माकं वधूरेषा हि राक्षसी ॥ ७४ ॥ प्रत्ययश्चेन्न मे वाक्ये युष्माभिर्दूरसंस्थितैः । दृष्टव्येयं ततः
पापा निजावासस्थिता निशि ॥७५॥ देवैषा निशि राक्षस्या रूपेण स्वगृहांगणे । परिभ्रमति वल्गंती
पश्यंती सर्वतो दिशः ॥ ७६ ॥ मंदं मंदं च फेत्कारान् मुंचत्येषा भयंकरान् । तेनोच्छलति लोकानां मारि-

रेषा पुरे तत्र ॥ ७७ ॥ म्रियमाणा तदा रात्रौ किंतूपद्रोष्यति त्वकं । प्रभाते देव तेनैषा निग्राह्या सुभटै-स्त्वया ॥ ७८ ॥ पुराप्यासीन्नृपो मारिहेतुं ज्ञातुं समुत्सुकः । अचिंतितमिदं श्रुत्वा तदा चित्ते चमत्कृतः ॥ ७९ ॥ अहो अभद्रमेतत्किं ममैतद्विमलं कुलं । सर्वतो विस्फुरल्लोके सकलंकं करिष्यति ॥ ८० ॥ रजन्यां ज्ञास्यते नूनं समये तद्यथास्थितं । कथितस्य विसंवादो यद्यस्या न भविष्यति ॥ ८१ ॥ ध्यात्वेति भूपतिः स्माह चिंताचांतमुखच्छविः । कथनीयं न कस्यापि गोप्यमेतत्त्वया शुभे ॥ ८२ ॥ सोवाचाहं किमज्ञाना ज्ञाता युष्माभिरीदृशी । भवेयं यदि नैकांते न ब्रूयां तत्तवैव हि ॥ ८३ ॥ ततः सत्कृत्य सा राज्ञा विसृष्टागान्निजं गृहं । वेषादिकं च राक्षस्यास्ततः सर्वमसज्जयत् ॥ ८४ ॥

रजन्यां सा समागत्याऽजल्पन्मलयसुंदरीं । स्थातव्यं तावदत्रैव त्वया पुत्रि गृहांतरे ॥ ८५ ॥ यावद्द्वारस्थिता दुष्टां हत्वा तां राक्षसीमहं । आगच्छामि समीपं तेऽन्यथानिष्टं भविष्यति ॥ ८६ ॥ शिक्षां दत्वेति सा गत्वा बहिर्वस्त्रविवर्जिता । चकार राक्षसीरूपं वर्णैश्चित्रितांगका ॥ ८७ ॥ दधारोल्मुकमास्येन कपालक्षुरिकाकरा । राज्ञो यथायथाख्यातं चकार च तथा तथा ॥ ८८ ॥ अत्रांतरे समीपस्थाऽन्यवेश्मोपरिवर्त्तिना । दृष्टा छन्नेन पापिष्टा तथारूपा नृपेण सा ॥ ८९ ॥ सत्यं तत्किल संजातं यत्तया कथितं

मम । तदंको मे कुले माभून्मृत मास्म जनोऽप्ययं ॥ ९० ॥ करिष्यति ममैषा किं दुष्टा सुस्थितचेतसः । निर्जनायां त्रियामायां घातनीयाधुनैव हि ॥ ९१ ॥ इति प्रजल्पता तेन तीव्रकोपेन भूभुजा । अपट्करं समादिष्टा निजविश्वासपुरुषाः ॥ ९२ ॥ अहो दुष्टामिमां गत्वा यूयं धत्त दृढग्रहाः । रथं चारोप्य वेगेन निर्वासयत पत्तनात् ॥ ९३ ॥ रौद्राख्यामटवीं नीत्वा रात्रिमध्ये तथा हत । प्रच्छन्नं न यथा वार्तामपि जानाति कश्चन ॥ ९४ ॥ आगच्छतोऽथ दृष्ट्वा तान् खड्गहस्तान्महाभटान् । प्रविवेशाशु भीता सा मध्ये राजसुतागृहं ॥ ९५ ॥ कंपमाना भयेनोचे हे वत्से केऽप्यमी नराः । आगच्छंति द्रुतं हंतुं मां राज्ञा प्रेषिताः किल ॥ ९६ ॥ राजादेशं विना येन स्थिताहं तव सन्निधौ । मृगाक्षि कुपितस्तेन मारयिष्यति मां नृपः ॥ ९७ ॥ तत्त्वं क्वापि क्षिपैतो मां यत्र पश्यंति नागताः । ततस्तादृशरूपा सा विवस्त्रा छिन्ननासिका ॥ ॥ ९८ ॥ मंजूषायां तया क्षिप्ता मंक्षु दत्तं च तालकं । अथ ते कोपदुष्प्रेक्षाः प्राविशन् राजपुरुषाः ॥ ९९ ॥ युग्मं ॥ दृष्ट्वा मलयसुंदर्या रूपं स्वाभाविकं ततः । दध्युस्ते राक्षसीरूपं त्यक्तं भीत्यानया खलु ॥ ४०० ॥ आः पापेऽद्यापि लोकांस्त्वं कियत्कालं हनिष्यसि । इति वादिभिरात्ता तैर्दृढं मलयसुंदरी ॥ १ ॥ बहिष्कृष्टा समारोप्य रथं प्रगुणितं च तां । चलिता वायुवेगेन सुभटा अटवींप्रति ॥ २ ॥

ततः साचिंतयच्चित्तेऽधिक्षिपंतो नरास्त्वमी । निर्हंतुमथवा त्यक्तुं नयंति क्वापि मामतः ॥ ३ ॥ अपराधं परं कंचिन्न जानाम्यहमात्मनः । अथ पूर्वार्जितं कर्म ममाशुभमुपस्थितं ॥ ४ ॥ ततो रे जीव यद्दुःखं तवागच्छति सांप्रतं । तत्सर्वं सह देहेनामुना भूत्वातिकर्कशा ॥ ५ ॥ चिंतयंतीति सा चित्ते विपाकं निजकर्मणः । महाबलकुमारेणाख्यातं श्लोकमथास्मरत् ॥ ६ ॥ सा तैर्नीत्वाटवीं छन्ना मुक्ता मलयसुंदरी। दुःखं न लभते कोऽत्र पूर्वकर्मोदयेन यत् ॥ ७ ॥ आगताः कृतकर्त्तव्या इत्याख्याते प्रभेऽथ तैः । सविशेषां च पूरक्षां राजाशिथिलयत्ततः ॥ ८ ॥ दापयामास सर्वत्र तालकानि वधूगृहे । निर्गासां प्रेक्षयामास तां नारीं किंतु नाप सः ॥ ९ ॥ अथ निर्जित्य तं भिल्लं कतिभिर्दिवसैः पुनः । महाबलः समायातो दयितोत्कंठितो भृशं ॥ १० ॥ नमस्कृत्य पितुः पादौ गदित्वोदंतमात्मनः । यावन्मलयसुंदर्याः प्रस्थितः स गृहं प्रति ॥ ११ ॥ तावद् धृत्वा करे तस्मै सूरपालेन भूभुजा । सर्वं मलयसुदर्याः कथितं तद्विजृंभितं ॥१२॥ कुमारो निःश्वसन् दीर्घं घर्षन्नात्मकरौ ततः । सगद्गदं ससीत्कारं वक्तुमेवं प्रचक्रमे ॥ १३ ॥

हा हा भ्रांतोऽसि जातस्त्वं किं विचारबहिर्मुखः । तात धातुविपर्यासोऽधुना तव बभूव किं ॥ १४ ॥ त्वया दीर्घधिया देव यावन्मम समागमं । विलंबितं न किं कार्यमिदं दोषेण गुर्वपि ॥ १५ ॥ निर्गासा सा

वशा भूरिकूटानां मंदिरं प्रभो। जानाम्यहं पुराप्यस्या माहात्म्यं मूलतोऽपि च ॥ १६ ॥ इदानीमावयोः कास्ति सा निष्कारणवैरिणी। आनीय तां दर्शयध्वं येन पृच्छाम्यहं स्वयं ॥ १७ ॥ नृपः स्माह कुमाराधिक्षेपवाक्यैरधोमुखः। नो सा विलोक्यमानापि लब्धा नष्टा तदैव सा ॥ १८ ॥ निराशोऽथ कुमारोऽवक् छलं लब्ध्वा हहा प्रिये। प्रणष्टा कापि सा कूटं। वितत्यैतत्तवोपरि ॥ १९ ॥ नूनं तात त्वया तस्या वचनेन मुधा निजे। कुले लांछनमानीतं वंशच्छेदश्च निर्मितः ॥ २० ॥ इत्युक्त्वा बहुधा कांतावियोगविधुरस्ततः। चिंताभरसमाक्रांतः कुमारोऽगान्निजं गृहं ॥ २१ ॥ पृष्ठलग्नो नरेंद्रोऽपि तत्रागात्पुत्रवत्सलः। स्वयं दत्तानि सर्वत्र तालकान्युदघाटयत् ॥ २२ ॥उच्चे च राक्षसीरूपा चेष्टमानेह सा मया। बहुधा ते प्रिया दृष्टा स्वयं मलयसुंदरी ॥ २३ ॥ दोषस्ततो न मे कश्चित् कुर्वतो दंडमीदृशं। येनेष्टापि निजा वत्स विनष्टा छिद्यते भुजा ॥ २४ ॥ तन्मा ताम्य कुमार त्वं स्वच्छं कृत्वा निजं मनः। पश्यासीद्गेहसारं स्वं किं किमस्ति च सांप्रतं ॥ २५ ॥ असंभाव्यमहो यन्मे वल्लभा सापि राक्षसी। उपद्रवति लोकांश्च सर्वान्मयसुंदरी ॥ २६ ॥ ज्ञास्यते किंतु सत्यं चेज्जीविष्यति कथंचन। इति ध्यायन् कुमारः स लग्नः सर्वमपीक्षितुं ॥ २७ ॥ युग्मं ॥

यावदुद्घाटयामास मंजूषां तां कुमारकः। अपश्यंस्तत्र सर्वेऽपि तावत्तां छिन्ननासिकां ॥ २८ ॥ विवस्त्रां राक्षसीरूपां क्षुधाशुष्कां विलोक्य तां। विस्मयेन क्षणं तस्थुस्ते सर्वेऽपि नृपादयः ॥ २९ ॥ कुमारोऽथ नृपं प्रोचे दृष्टा या राक्षसी त्वया। एषैव सा महाराज कृतवेषा कथंचन ॥३०॥ कर्षयित्वा ततस्तां स्त्रीं ताडयामास निष्ठुरं। कुमारः स तथा सर्वं यथा सा स्वकृतं जगौ ॥ ३१ ॥ कुपितेन ततो राज्ञा पापा निर्भर्त्स्य सा भृशं। देशत्यागेन निर्दिष्टा निंद्यमाना पुरीजनैः ॥३२॥ कुमारो मौनमालंब्य शोकेन विवशो भृशं। त्यक्त्वा चतुर्विधाहारं मर्तुकामः स्वयं स्थितः ॥ ३३ ॥ ततो राजा च देवी च परिवारजनोऽपि च। संजातो दुःखतोऽथोऽनुकुमारं मरणोत्सुकः ॥३४॥ राज्योच्छेदभयाज्जाता व्याकुलाः सचिवा अपि। चिंताचक्रे समरूढः पुरलोकोऽपि विह्वलः ॥ ३५॥ इतश्च तत्र संप्राप्तः प्रतीहारनिवेदितः। एकोऽष्टांगनिमित्तज्ञो गणकः पुस्तकान्वितः ॥ ३६ ॥ ततः किंचित्समाश्वस्तैर्मंत्रिभिः कृतभक्तिभिः। परोपकारी प्रपच्छे नैमित्तिकशिरोमणिः ॥ ३७ ॥ इत्थमित्थं च हस्तान्नो वधूर्मलयसुंदरी। निष्कलंका समुत्तीर्णा कुमारस्यास्य वल्लभा ॥ ३८ ॥ दुःखेन तेन राजासौ सकुटुंबोऽशनं विना। मरणैकमना आस्ते भयभीतो जनोऽपि च ॥ ३९ ॥ ततो ब्रूहि निमित्तज्ञः सास्माकं सुकृतैरिह। जीवंती विद्यते कापि किंवा नास्त्येव सर्वथा ॥ ४० ॥ चिंत-

यित्वा ततोऽवादीदादेशीति विचक्षणः। जीवंत्यस्ति कुमारस्य वर्षांते सा मिलिष्यति ॥४१॥ जीवंती विद्यते सेति श्रुत्वा वाक्यं सुधोपमं । उज्जीवित इवाजल्पत् कुमारः स्फारितेक्षणः ॥ ४२ ॥ अहो नैमित्तिक ब्रूहि विलंबस्थापि मा क्षणं । क सा तिष्ठति जीवंती सुंदरी मम वल्लभा ॥ ४३ ॥ ज्ञानी स्माह कुमारैषा स्थिता न ज्ञायते कचित् । शून्ये वसति वा स्थाने सुखिता दुःखिताथवा ॥ ४४ ॥ ततो यैः सुभटैस्त्यक्ताटव्यां सा सुंदरी तदा । नृपेणाहूय ते पृष्टा वितीर्याभयमंजसा ॥ ४५ ॥

हंहो ब्रूत नराः सम्यक् तदारण्ये ममाज्ञया । नीत्वा मलयसुंदर्या वत्सायाः किमु किं कृतं ॥ ४६ ॥ ऊचुस्ते देव सा यावन्नीत्वा तत्र व्यमुच्यत । भवद्दीनमुखी भीत्या कंपमानारुदद्भृशं ॥ ४७ ॥ दध्येऽस्माभिस्ततश्चिह्नैरेभिरेषा न राक्षसी । भ्रांतः केनापि दुष्टेन नूनं व्यामोहितो नृपः ॥ ४८ ॥ स्त्रीहत्या भ्रूणहत्या च महापापमिदं ततः । न हंतव्यात्र मुक्तेयं स्वयं शून्ये मरिष्यति ॥४९॥ ध्यात्वेति रुदतीं मुक्त्वा जीवंतीमेव तत्र तां । अत्रागत्य तवास्माभिर्भीत्या मिथ्या प्रजल्पितं ॥ ५० ॥ नृपोऽवोचदहो योऽभूद्या-मीषां न सापि मे । बुद्धिरेषाममूषा च हताशस्य न सापि मे ॥ ५१ ॥ इत्यात्मानं नृपो निंदन् प्रशंसंश्च भृशं नरान् । प्रसादैः प्रीणयामास तांस्तं च गणकोत्तमं ॥ ५२ ॥ कुमारः स्माह भो ज्ञानिन् मिलिता

यत्त्वयोदितं । जीवंती सा यतोऽमीभिर्मुक्ता बाला हता न हि ॥ ५३ ॥ ततो विलोक्यते तात तत्रान्यत्रापि साधुना । चंद्रावत्यां नगर्यां च प्रेष्यते कोऽपि पुरुषः ॥ ५४ ॥ श्रीवीरधवलस्यापि वृत्तांतोऽयं निवेद्यते । अस्माकं तत्र सा पुण्यैर्गता स्याच्चेत्कथंचन ॥ ५५ ॥ अथायाता न तत्सोऽपि गवेषयति भूपतिः । कुमारोक्तं ततः सर्वं राज्ञा तत्समनुष्ठितं ॥ ५६ ॥ प्रतिबोध्य कुमारः स भोजितो भूभुजा ततः । स्वयं भुक्तं स्थितं चापि चिंतामग्नेन चेतसा ॥ ५७ ॥ कालेन कियता तेऽथ संप्राप्ताः प्रेषिता नराः । बालायाः कापि तस्यास्तु शुद्धिर्लब्धा न केनचित् ॥ ५८ ॥ कुमारोऽथ निराशः सन् दुःखमग्नो व्यचिंतयत् । अपुण्यानि ममाहो यद्वियोगः प्रियया सह ॥ ५९ ॥ हा हा शून्ये महारण्ये कराभ्यां हृदयं स्वयं । आहत्य हृदयस्फोटं भविष्यसि मृता प्रिये ॥ ६० ॥ अथवेतस्ततो यांती केनाप्याप्ता भविष्यति । अथवा क्रूरजीवैस्त्वं भक्षिताशु भविष्यसि ॥६१॥ त्वं मेऽपि दयिता भूत्वा पतितासीदृगापदि । यूथभ्रष्टा कुरंगीव भ्रमस्येकाकीनी वने ॥६२॥ उत्सुकापि प्रिये स्वच्छे सहागमनहेतवे । मया दैवहतेन त्वं पश्चान्मुक्ता कथं तदा ॥६३॥

अनुभूय सुखं तादृगीदानीं दुःखसागरे । निमग्ना दयिते गाढं भविष्यसि कथं कथं ॥६४॥ इत्यादि बहुधा चित्ते स्मारं स्मारं नरेंद्रसूः । हृदीव शल्यितो भल्ल्या रतिं नाप कथंचन ॥ ६५ ॥ ततो नैमित्तिका-

ख्यातं स्मरन् खड्गयुतो निशि । कुमारो निरगाच्छन्नः प्रियां सर्वत्र वीक्षितुं ॥ ६६ ॥ प्रभाते पितरौ पुत्रमपश्यंतौ च कुत्रचित् । ऊचतुर्न क्षमः स्थातुं वत्सोऽगाद्वीक्षितुं प्रियां ॥ ६७ ॥ आपदं लप्स्यते क्वापि नानादुःखं सहिष्यते । पांथवत्पादचारी स भूशायी च भविष्यति ॥ ६८ ॥ लब्ध्वा तां सुवधूं सुतं पुनरिहायांतं कदा लोचने–र्द्रक्ष्यावः पितराविति प्रतिदिनं चिंतातुरौ तस्थतुः ॥ एकाकी नृपनंदनस्तु वनितां पश्यन्प्रणश्यत्तृषा–क्षुन्निद्रासुखसंगमः क्षितितलं बभ्राम हृल्लेखवान् ॥ ६९ ॥

॥ इत्यागमिकश्रीजयतिलकसूरिविरचिते ज्ञानरत्नोपाख्याने मलयसुंदरीचरित्रे श्वसुरकुलसमागमप्रकाशनो नाम तृतीयः प्रस्तावः ॥ श्रीरस्तु ॥



## ॥ अथ चतुर्थः प्रस्तावः प्रारभ्यते ॥

इतश्च प्रोज्झिता रात्रौ बाला मलयसुंदरी । अरण्ये क्रूरसत्त्वानां शब्दान् श्रुत्वा व्यचिंतयत् ॥ १ ॥ शून्येऽरण्ये तमस्विन्यामुज्झित्वा मां गताः खलु । निर्दया रथमादाय हा हा ते राजपूरुषाः ॥ २ ॥ अपराधमनाख्याय कृतो दंडो यदीदृशः राज्ञा मे तन्महादुःखमेकमेव दुनोति मां ॥ ३ ॥ अहो चित्रमिदं

केनाप्येष यद्विप्रतारितः । श्वसुरः सूरपालो मे बुद्धिमानपि सर्वथा ॥ ४ ॥ हा सूरपालभूपाल निर्विचारः किमीदृशः । पश्चात्तापेन पश्चात्त्वं भविष्यसि कथं पुनः ।. ५ ॥ सुखहेतोर्विमुक्तायास्तदा प्रियतम त्वया । गच्छता मम जातेयमवस्था सांप्रतं पुनः ॥ ६ ॥ हा वल्लभातिदुर्लभ ज्ञात्वोदंतमिमं मम । विरहानलसंतप्तो भविष्यसि कथं कथं ॥ ७ ॥ हा मातस्तात हा भ्रातर्मिलिष्यामि कथं हि वः । एतावंत्यपपुण्याया मम पुण्यानि संति न ॥ ८ ॥ अभविष्यन्न चेज्जन्म मृत्युर्वा जन्मतोऽपि मे । अभविष्यं तदा नाहमीदृग्दुःखस्य भाजनं ॥ ९ ॥ बहुना शोचितेनापि परित्राणं कदापि न । कारणं विधिरेवेति सा तं श्लोकं ततोऽस्मरत् ॥ १० ॥

इत्यादि बहुधा तस्या विलपंत्या महाव्यथाः । दुखार्त्तायाः समुत्पेदे जठरे गर्भपूरिते ॥ ११ ॥ वेदनाविधुरा साथ सुपुवे नंदनं वरं । पूर्वेव तरणेर्विंबं तेजःपुंजविराजितं ॥ १२ ॥ आनंदितांकमारोप्य पश्यंती तं निजं सुतं । स्वयमेव वितन्वाना सूतिकर्मेत्युवाच च ॥ १३ ॥ हा वत्स स्वच्छ कुर्वेहं तवारण्येऽत्र कीदृशीं । मनोरथशतासस्य वर्द्धापनपरंपरां ॥ १४ ॥ खिद्यमानेति बहुधा सहमाना च यातनां । कंप्यमाना भयेनोच्चैर्गमयामास तां निशां ॥ १५ ॥ प्रभाते सा समीपस्थां नदीं गत्वाभवच्छुचिः । स्मृत्वा

देवान् गुरून् चापि फलान्याददबुभुक्षिता ॥ १६ ॥ निकुंजे कापि सा यावत्पालयंती स्तनंधयं । युगपच्छोकहर्षाभ्यां तस्थौ संकीर्णमानसा ॥ १७ ॥ तत्र तावद्वहन् मार्गे परिवारेण भूयसा । बलसाराभिधस्तस्थौ सार्थवाहो नदीतटे ॥ १८ ॥ इतस्ततो जनाश्चेलुर्घासैधोदकहेतवे । निर्ययौ सार्थवाहोऽपि सार्थतः कायचिंतया ॥ १९ ॥ यत्र पुत्रद्वितीयाभूत् कुंजे मलयसुंदरी । यावत्तन्निकषा सोऽगादरोदीत्तावदर्भकः ॥ २० ॥ श्रुत्वा डिंभस्वरं सार्थवाहो विस्मितमानसः । निकुंजं प्रविशन् बालामपश्यत्पुत्रसंयुतां ॥ २१ ॥ अपूर्वा कापि रूपश्रीर्लावण्यमसमं तथा । एतस्याश्चिंतयन्नेव सोऽपृच्छत्सार्थनायकः ॥ २२ ॥ कासि त्वं किमरण्येऽत्र सुंदर्येकाकिनी किमु । आकारोऽपि तवाख्याति प्रसूतिं प्रवरे कुले ॥ २३ ॥ अपहारेण रोषेणाथवाभीष्टवियोगतः । वने बभूव वासस्ते पुत्रस्य प्रसवोऽत्र च ॥ २४ ॥ बलसाराभिधानोऽहं व्यवहारी महर्द्धिकः । सागरतिलके द्रंगे वसाम्यन्यत्र यामि च ॥ २५ ॥ भव्यं जातं मया सार्द्धं यत्तेऽभूदेष संगमः । ममास्त्यत्र पटावासस्तत्रागत्य सुखं भज ॥ २६ ॥ तयाथ चिंतितं चित्ते शीलं मे खंडयिष्यति । धनाढ्योऽयं युवा दृप्तस्तद्ददामि मृषोत्तरं ॥ २७ ॥ ध्यात्वेत्युक्तं तया श्रीमन्नहं मातंगबालिका । पितृभ्यां कलहे रोषान्निर्गत्यात्र समागता ॥ २८ ॥ तत्त्वं याहि निजावासमागमिष्याम्यहं न तु । निजपित्रोर्मिलिष्यामि गत्वा

दुःखेन तस्थुषोः ॥ २९ ॥ आकारचेष्टितैरेभिर्नैषा मातंगबालिका । कारणेन तु केनापि करोति कपटोत्तरं ॥ ३० ॥ ध्यात्वेति बलसारः स जगदे चपलेक्षणे । चांडालत्वमिदं नैव प्रकाश्यं क्वापि ते मया ॥३१॥ तदागच्छ ममावासे तिष्ठ त्वं निजवांछया । करिष्यामि तदेवाहं यत्त्वं वक्ष्यसि भामिनी ॥ ३२ ॥

इति जल्पन्नसौ लुब्धस्तदंकादाशु तं सुतं । गृहीत्वा चलितो गेहान्निधानमिव तस्करः ॥ ३३ ॥ खंडयिष्यति मे शीलं पापोऽयमिति चिंतया । जाता कार्यविमूढा सा पतिता संकटे भृशं ॥३४॥ पुत्रस्नेहवशेनैषा लग्ना तस्याथ पृष्ठतः । जीवे गच्छति किं पश्चाचेतना कापि तिष्ठति ॥ ३५ ॥ प्रहृष्टः सार्थवाहस्तां भाषमाणो मृदूक्तिभिः । पुत्रं संगोप्य वस्त्रेण प्राविशन्निजमंदिरं ॥ ३६ ॥ गुप्तस्थाने निवेश्याथ खिद्यमानां नृपात्मजां । किंचिदाश्वासयामास पुत्ररत्नसमर्पणात् ॥ ३७ ॥ यत्किंचन वदत्येषा कर्त्तव्यं तत्त्वया शुभे । शिक्षयित्वेति दास्येका नियुक्ता तेन तांप्रति ॥ ३८ ॥ वरभोजनवस्त्रालंकाराद्यं सर्वदा ददौ । बभाषे न वचः किंचित्तस्याः सोऽप्रीतिकारकं ॥ ३९ ॥ किंचित्स्वस्था ततस्तेन पृष्टा सा तव नाम किं । तया मंदं बभाषेऽहं नाम्ना मलयसुंदरी ॥४०॥ बलसारस्ततो दध्यौ स्वं सम्यग् मा वदत्वियं । नाम्नैव ज्ञायते कापि विशिष्टकुलसंभवा ॥ ४१ ॥

ततः स्थानादयं प्राप निर्विलंबप्रयाणकैः । सागरतिलकं नाम वेलाकूले निजं पुरं ॥ ४२ ॥ गुप्तगेहे ततः कापि मुक्ता सा ससुता तथा । न जानाति यथा कोऽपि तामेकां दासिकां विना ॥४३॥ अथ तेनान्यदाभाणि सैवं मलयसुंदरी । प्रतिपद्यस्व मामद्य वल्लभत्वेन सुंदरि ॥ ४४ ॥ ममास्याः सर्वलक्ष्म्यास्त्वं स्वामिनी भव मानिनि । आजन्माहं तवाज्ञायाः कारकः सपरिच्छदः ॥ ४५ ॥ ममाऽपुत्रस्य पुत्रोऽयं भवतात्तव पुत्रकः । प्रत्यहं प्रार्थयामास मदनांधः स भामिनी ॥ ४६ ॥ ऊचे मलयसुंदर्या महापापमिदं तव । न युज्यते कुलीनस्य विरुद्धं जन्मनोर्द्वयोः ॥ ४७ ॥ अपि नश्यतु सर्वस्वं भवत्वंगं च खंडशः । कलंकयामि शीलं स्वं न तथापींदुनिर्मलं ॥ ४८ ॥ वहुप्रकारमित्यादि वारितः स तथा तया । यथा विधाय तूष्णीकां बाढं रोषारुणोऽभवत् ॥ ४९ ॥ तस्यास्तं पुत्रमादाय दत्वा तालं च वेश्मनि । स्वप्रियाप्रियसुंदर्या अर्पयामास स क्रुधा ॥ ५० ॥ ऊचे चेष प्रिये बालं तेजस्वी रूपवानन्मया । अशोकवनिकामध्ये लेभे लक्षणसंयुतः ॥ ५१ ॥

भविष्यत्युज्झितो नार्या स्वैरिण्यात्र कदाचन । ततोऽयं भवतात्पुत्र आवयोरनपत्ययोः ॥ ५२ ॥ तस्यात्मनामलेशेन बल इत्यभिधां व्यधात् । धात्रीं च स्थापयामास स्तन्यपानाय सार्थपः ॥ ५३ ॥ शिक्षां

दत्वाथ भार्याया आपृच्छ्य स्वजनानपि । गेहाच्छन्नं गृहीत्वा तां बलान्मलयसुंदरीं ॥ ५४ ॥ पूर्वं सज्जीकृतं पोतं सार्थवाहोऽधिरूढवान् । उत्क्षिप्ता नांगराः सर्वे शीघ्रं कर्मकरैस्ततः ॥ ५५ ॥ ॥युग्मं॥ आज्ञया सार्थवाहस्य ततः पोतः स पूरितः । तटं बर्बरकूलाख्यं प्रत्यचालीज्जलाध्वना ॥ ५६ ॥ यानपात्रे पयोराशौ पूर्णवेगेन गच्छति । दुःखिता चिंतयामास चित्ते मलयसुंदरी ॥५७॥ विक्रेष्यते विदेशे मां किंवा क्षेप्स्यति सागरे । मारयिष्यति किं वैष सार्थवाहो दुराशयः ॥ ५८ ॥ यद्भाव्यं तन्ममात्रास्तु स परं पुत्रकः कथं । भविष्यतीति दुःखेनाभवज्जीवन्मृतेव सा ॥ ५९ ॥

तयाऽश्रूणि विमुंचत्या स पृष्टो रुद्धकंठया । हंहो सत्पुरुषाख्याहि मत्पुत्रो विहितः कथं ॥ ६० ॥ स स्माह हृष्टचेता मे मन्यसे यदि वांछितं । मेलयित्वा सुतं तत्ते पूरयामि समीहितं ॥ ६१ ॥ तं व्याघ्रदुस्तटीन्यायं वीक्ष्य सात्मन्युपस्थितं । मुनिवन्मौनमादाय शीलरक्षाकृते स्थिता ॥६२॥ अनुकूलेन वातेन प्राप बर्बरकूलकं । कतिभिर्दिवसैर्यानपात्रं क्षेमेण तस्य तत् ॥ ६३ ॥ सर्वं भांडं समुत्तार्य शुल्कदानपुरस्सरं । बलसारस्ततो लग्नो विधातुं क्रयविक्रयं ॥६४॥ विक्रीता भूरिद्रव्येण तेन सापि महासती । कृमिरागवस्त्रकारिकारूणां निर्दये कुले ॥ ६५ ॥ तत्रापि दिव्यरूपा सा प्रार्थिता कामहेतवे । कामांधैर्युवभिः सामदा-

नदंडैरनेकधा ॥ ६६ ॥ तस्यास्तु चलितं चेतो न कदापि मनागपि । एवंरूपा महासत्यो भवंति भुवने यतः ॥ ६७ ॥ ततस्तैर्युवभिः क्रुद्धैस्तक्षं तक्षं वपुर्ध्रुवं । तथा रुधिरमादायि यथा मूर्छामवाप सा ॥ ६८ ॥ कारं कारमंतराले कतिचिद्दिवसान् पुनः । ततश्चुस्ते महापापा रक्तार्थं तां सतीमिति ॥ ६९ ॥ साचिंतयदहो पूर्वं तद् दुष्कर्म मयार्जितं । उपर्युपरि दुःखाली येनैवं ढौकते मयि ॥ ७० ॥ उत्पन्ना कुत्र कुत्राहं परिणीता गता क च । यद्यद्यापि मे भावि सोढव्यं तत्तदेव हि ॥ ७१ ॥ अन्यदा साथ सर्वांगं तैस्तक्षित्वात्तलोहिता । मूर्छिता पतिता भूमौ लिप्ता रक्तेन सर्वतः ॥७२॥ इतश्च सहसाकाशादुत्तीर्यामिषवांछया। भारंडपक्षिणा चंचुपुटेनोत्पाटिता सका ॥ ७३ ॥

स यावद्गगने गच्छन् प्रापोपरि पयोनिधेः । पुरस्तादपरः पक्षी तावद्भारंड आययौ ॥ ७४ ॥ मांसखंडस्य लोभेन युयुधे सह तेन सः । ततश्चंचुपुटाद्बाला गलिता चेतनान्विता ॥ ७५ ॥ परमेष्ठिनमस्कारं जल्पंती पतिताथ सा । नीरोपरि तरद्धस्तिमत्स्यपृष्ठे विधेर्वशात् ॥ ७६ ॥ भारंडस्य मुखात्तावत्पतिता हंत वारिणि । महामत्स्यस्य पृष्ठे तु स्थिता दैवनियोगतः ॥ ७७ ॥ यदा तु जलधेर्नीरे मत्स्य एष निमंक्ष्यति । निराधारा मरिष्यामि तदाहमपि निश्चितं ॥ ७८ ॥ इति निश्चित्य चित्ते सा चक्राश्वराधना

स्वयं । परमेष्ठिनमस्कारं पपाठोच्चैः पुनः पुनः ॥ ७९ ॥ त्रिभिर्विशेषकं ॥ परमेष्ठिनमस्कारं शृण्वन् वक्रितकंधरः । पृष्ठोपरि स्थितां तां स वीक्षांचक्रे पुनः पुनः ॥ ८० ॥ क्षणमेकं झषः स्थित्वा तरन् पश्चाज्जलोपरि । स्थिरचित्तस्तथैवैकां दिशं गंतुं प्रचक्रमे ॥ ८१ ॥ अहो नयति मामित्थं सुखेनाथ क्व नेष्यति । प्रकृष्टहितकृत्कोऽपि मत्स्योऽयमिति विस्मिता ॥ ८२ ॥ जलकेलिनिमित्तं किं गजारूढाब्धिनंदनां । एषा कल्पलता किं वा चलाद्रेरुपरि स्थिता ॥ ८३ ॥ इत्येवं विविधां शंकां जनयंती खचारिणां । जलक्षालितसर्वांगी ययौ सा मत्स्यसंस्थिता ॥ ८४ ॥ ॥ त्रिभिर्विशेषकं ॥ सुखं सुखमयं गच्छन् मत्स्यः प्राप सुपोतवत् । सागरतिलकाख्यास्य वेलाकूलस्य सन्निधौ ॥ ८५ ॥ इतश्चाधिपतिस्तस्य वेलाकूलस्य निर्ययौ । कंदर्पाख्यस्तदा राजपाटिकायां जनैर्वृतः ॥ ८६ ॥ यावद्गजाधिरूढः स समागादंबुधेस्तटं । अपश्यत्तावदायांतं तं मीनं नगरंप्रति ॥ ८७ ॥ तमारूढजनं मीनं दृष्ट्वा सर्वेऽपि विस्मिताः । अपूर्वमिदमाश्चर्यं दृश्यतेऽद्येति वादिनः ॥ ८८ ॥ गजारूढ इहायाति हरिवद्गरुडस्थितः । क एष जलमार्गेणेत्यवदंस्ते परस्परं ॥ ८९ ॥ राज्ञाभाण्यस्य मत्स्यस्य मानुषस्यापि केनचित् । स्वैरमागच्छतो नैव कार्यं किमपि भो भटाः ॥ ९० ॥

ततः कौतूहलाकृष्टाः सर्वे मौनेन संस्थिताः । अपश्यन्मत्स्यमायांतं व्यापारितविलोचनाः ॥ ९१ ॥

स्वयं राजा जगादाथ प्रेम्णा मां मन्यसे यदि । तदा भव्यं यतः प्रेम वरं लोके द्विपाक्षिकं ॥१७॥ अन्यथा कामयिष्येऽहं सुंदरि त्वां बलादपि । यतो मम मनो लग्नं तव रूपेऽतिचारुणि ॥ १८॥ ततोऽसौ चिंतयामास प्रागेव स्मरचेतसा । अनेनाहं समानीता तदद्य प्रकटीकृतं ॥ १९ ॥ धिग् धिग् मे रूपचारुत्वं पातालं यातु यौवनं । अमुना येन सर्वत्र मया प्राप्ता कदर्थना ॥ २० ॥ जलधौ किं निमग्नाहं मत्स्येनोत्तारिता च किं । पतिताहमिहागत्य दुःखे श्वभ्रोपमे यतः ॥ २१ ॥ कामांधो यदि मे शीलं खंडयिष्यत्ययं बलात् । मर्त्तव्यं तत्तदा नूनं मयोपायेन केनचित् ॥२२॥ वरं मृत्युर्न शीलस्य भंगो येनाऽक्षतव्रतः । देवत्वं लभते याति नरकं तु क्षतव्रतः ॥ २३ ॥ अथोचे सा महाराज नयनिष्ठा नृपाः प्रजाः । पितृवत्पालयंत्यत्र सर्वकालं हितार्थिनः ॥२४॥ त्यक्त्वा न्यायं त्वमप्येवं यद्यकार्यं करिष्यसि । ततो नष्टाः प्रजाः सर्वाः शरणाद्भयमुत्थितं ॥ २५ ॥ सतीनां शीलविध्वंसः कृतो लोकेऽत्र निश्चितं । अकीर्तिं कुरुते कामं तीव्रदुःखान्यमुत्र तु ॥ २६ ॥ किं च शीलं सतीनां हि खंड्यमानं सुदुष्करं । केसरिणः सटा यद्वद् दृग्विषाहेर्मणिर्यथा ॥ २७ ॥ यत्र प्रकुपिताः सत्यस्तं कुर्युः क्षारपुंजकं । बुध्यस्व त्वं ततो राजन् स्वकुलं मा कलंकय ॥ २८ ॥ विशालस्तव वंशोऽयं कुलं च विमलं नृप । गुणाधारस्त्वमेकोऽसि कुकार्यं युज्यते कथं ॥२९॥

स तया बोधितोऽप्येवं महासत्या नरेश्वरः । दुष्टाभिप्रायतस्तस्मात् कामांधो न ह्यपासरत् ॥ ३० ॥ खंडयिष्याम्यहं शीलमस्या नार्या बलादपि । क्षारपुंजं करोत्येषा मां चित्ते चिंतयन्निति ॥ ३१ ॥ ततो निर्गत्य कंदर्पो राजकार्याणि निर्ममे । ध्रुवं शल्यायमानायां तस्यामेव स्त्रियां हृदि ॥ ३२ ॥ युग्मं ॥ धर्मध्यानपरा सापि नित्यं मलयसुंदरी । बद्धकक्षा मृतौ तस्थौ विच्छायमुखपंकजा ॥ ३३ ॥ स्वयं बभाण राजा स भाणयामास चापरैः । भोगार्थं तां सतीं सा तु विभेदे नैव किंचन ॥ ३४ ॥ यद्यद्वस्तु समायातमपूर्वं तत्तदर्पितं । चित्तावर्जनकार्येण तस्यैतेन महीभुजा ॥ ३५ ॥

अथान्यदा शुकस्यास्यादृगच्छता पुष्कराध्वना । एकमाम्रफलं पक्वं स्रस्तं भारेण सुंदरं ॥ ३६ ॥ उत्संगे राज्ञ आकाशे समासीनस्य पश्यतः । पतितं पाणिनादाय तेनैवं चिंतितं पुनः ॥ ३७ ॥ कुतोऽत्र संभवश्चूतफलानां मासि फाल्गुने । हुं ज्ञातं छिन्नटंकोऽस्ति नगरंनिकषा गिरिः ॥ ३८ ॥ तस्यातिविषमोत्तुंगशृंगसंस्थात्सदाफलात् । रसालात्फलमादाय समुड्डीनः शुकः किल ॥ ३९ ॥ भारेणाम्रमिदं कीरमुखात्स्रस्तं भविष्यति । स्वयं स्वादाम्यदस्तर्किं ददे कस्मै प्रियाथवा ॥ ४० ॥ ध्यात्वेत्यूचे स भोस्तस्यै समर्प्येदं कलं फलं । तामानीयावरोधेऽद्य मुंचताहं भजे बलात् ॥ ४१ ॥ इत्युक्त्वा प्रेपितास्तेन गत्वा तत्र

जनास्तु ते । तदाम्रमर्पयामासुः सापि जग्राह विस्मिता ॥४२॥ प्राप्तं फलमकालेऽपीदं पुण्यैश्चिंतयंत्यदः। तैरानीयात्ररोधे सा क्षिप्ता मलयसुंदरी ॥ ४३ ॥ ततस्तैः पुनरागत्य राज्ञे सर्वं न्यवेद्यत । कृच्छ्रेणापालय-द्राजाप्यागच्छंतीं विभावरीं ॥ ४४ ॥ अथ सा चिंतयामास सती मलयसुंदरी। कंदर्पोऽयं सकंदर्पो दर्पान्मां व्यथयिष्यति ॥४५॥ केशेभ्यो गुटिकां कृत्वा तां घृष्ट्वाम्ररसेन च । ततश्चकार सा भालतलके तिलकं निजे ॥ ४६ ॥ ततः सा पुरुषो भूत्वा दिव्यरूप उपाविशत् । विस्फुरद्वरलावण्यो विश्वस्तो मत्तवारणे ॥ ४७ ॥ दृष्ट्वात्यद्भुतरूपं तमाकस्मिकमिवागतं । विस्फारिताक्षिपत्रास्ता व्यस्मयंत नृपप्रियाः ॥ ४८ ॥ किं कोऽप्येष पुमान् दिव्यः पातालादिह निर्गतः । अवतीर्णो दिवः किंवा किंवा विद्याधरात्मजः ॥ ४९ ॥ इति चिंता-कृतां तासामभवन् स्वांतविक्रयाः । राकाचंद्रोदये वार्द्धेरिव वेलाजलोर्मयः ॥५०॥ तासां कटाक्षविक्षेपास्त-त्रंगे पतिताः समं । प्रसरन्मंजरीगंधे रसाले भ्रमरा इव ॥ ५१ ॥ नरं तं तादृशं दृष्ट्वाऽवरोधं च विसंस्थुलं। गत्वा प्राहरिकाः सर्वे विस्मिता भूपतेर्जगुः ॥ ५३ ॥ आगतोऽथ नृपोऽपश्यन्नरं तं विस्मयावहं । धीरं सौम्यं सुखासीनं प्रत्यक्षमिव मन्मथं ॥ ५४ ॥ कोऽयं कथं प्रविष्टोऽत्र बहुधेति विकल्पयन् । यावत्तां तत्र सोऽप-श्यत्तावन्नैक्षिष्ट सुंदरीं ॥ ५५ ॥ अत्रानीयाद्य मुक्ता या क सा मलयसुंदरी । उत्पाद्य चक्रुर्दि - पृष्ठाः

प्राहरिका इति ॥५६॥ इदानीमेव सा देव समासीनात्र खल्वभूत् । निर्गता न बहिः कापि येन द्वारस्थिता वयं ॥ ५७ ॥ तैरित्युक्ते नृपोऽत्रोचचिंतयित्वा क्षणं हृदि । सैव स्त्री पुरुषो जातः कथंचन किलाधुना ॥५८॥ ततः पृष्टः स ना कीदृक् त्वमात्मानं निवेदय । स स्माह यादृशोऽहं किं न मां पश्यथ तादृशं ॥ ५९ ॥ विद्याधरादिसिद्धादिलक्षणेभ्यो विलक्षणं । सामान्यनरचिह्नालंकृतं धीरस्थिरांतरं ॥६०॥ वेषं मलयसुंदर्या दधतं तं तथैव च । पश्यन्नुवाच भूनाथो हुं ज्ञातमिति विस्मितः ॥ ६१ ॥ युग्मं ॥ मद्वांछितमनिच्छंती भोस्त्वं मलयसुंदरी । प्रतिपन्नासि पुंरूपं प्रकारेणात्र केनचित् ॥ ६२ ॥ रे नीत्वा बहिरावासे तदेनं धत्त रक्षकाः । स्थितोऽत्रांतःपुरेऽनर्थं सकलेऽपि करिष्यति ॥ ६३ ॥ इत्युक्ते तेन नीत्वा स पुमान् मलयसुंदरः । धृतस्तैस्तत्र हृष्टोऽस्याद्धर्मध्यानोद्यतः सदा ॥ ६४ ॥ सकंदर्पः स कंदर्पः क्ष्मापोऽप्यागत्य तं सदा । पप्रच्छोपचरन् भूरि परैश्चैवमपृच्छयत् ॥६५॥ नृरूपं किं त्वया चक्रे प्रयोगेणेह केन च । स्वाभाविकं कथं रूपं भविष्यति पुनस्तव ॥६६॥ किंतु नोवाच किंचित्स जितकासी ततो नृपः । रोषेणाताडयन्नित्यं नानाताडनकर्मभिः ॥ ६७ ॥ ताड्यमानो भृशं सोऽथ पुमान्मलयसुंदरः । तध्यायद्यतः स्थानात्कथंचिन्निःसराम्यहं ॥ ६८ ॥ ततो मुच्ये महादुःखादतो नरकसोदरात् । कदाचिदन्यदा रात्रौ प्रसुप्तो यामिकस्ततः ॥ ६९ ॥

ततो निःसृत्य सोऽज्ञात आगतो नगराद्बहिः । मर्तुकामः क्वचिद्वेश्यकुडयामेकत्र तस्थिवान् ॥ ७० ॥ नाति-दूरेऽस्ति तस्यास्त्वंधकूपोऽल्पबलाभिधः । स परिभ्रमता तेन पुंसा दृष्ट इतस्ततः ॥ ७१ ॥ स्थित्वा तत्र वटे दुष्टो राजा मां लप्स्यते यदि । मारयिष्यति रोषांधो मारेण विविधेन तत् ॥ ७२ ॥ युक्तं ततोऽधुना मर्तुं पतित्वा मेऽत्र कूपके । स्मृत्वाभीष्टं ततो देवं चकाराराधनां च सां ॥ ७३ ॥ अरे दैव त्वया वैरिन् वियोज्येत्थं स्वबंधुतः । निर्भाग्याहं कृता तादृग् दुःखानां भाजनं भृशं ॥ ७४ ॥ महाबलेन निस्सीमताहृक्स्नेहेन तेन मे । समं प्रियतमेनात्र वियोगो विदधे त्वया ॥ ७५ ॥ तमेव मेलयेस्तन्मे प्रसयापि भवांतरे । यतो यद्विदधासि त्वमवश्यं भवतीह तत् ॥ ७६ ॥ इत्युपालंभमाना सा दैवं पुंरूपधारिणी । कूपे झंपाप्रदानाय सज्जनां कर्तुमुद्यता ॥ ७७ ॥ चतुर्भिः कलापकं ॥

इतश्च स्वप्रियां पश्यन् स सर्वत्र महाबलः । भ्रामं भ्रामं समागत्य तस्यैवाह्नो निशागमे ॥ ७८ ॥ तस्यामेव प्रसुप्तोऽभूद्वेश्यकुडयां श्रमातुरः । प्रियावियोगसंतप्तः प्रमीलां प्राप नो पुनः ॥ ७९ ॥ युग्मं ॥ कुत्र कुत्र मयेदानीं द्रष्टव्या सेति चिंतयन् । उक्तं मलयसुंदर्याः सर्वं शुश्राव तत्तदा ॥ ८० ॥ अहो घल-है किं प्रियाया इव भाषितं । श्रूयते वनितावाक्यं प्र

मृथा विलंबस्व क्षणं शुभे । इति जल्पन् दधावेष यावत् शीघ्रं महाबलः ॥ ८२ ॥ तनात भणती सावत शरणं मे महाबलः । दत्तांधकूपके झंपा कुमारेणापि पृष्ठतः ॥ ८३ ॥ ततः सोऽस्फुटचैतन्यो नरो मूर्छाभरार्दितः । मंदं मंदं जगादेति शरणं मे महाबलः ॥ ८४ ॥ विस्मितोऽथ कुमारः स तस्यांगं समवाहयत् । मूर्छाभंगे ततः सोऽपि चैतन्यं प्राप पूरुषः ॥ ८५ ॥ पुमान्मां किं स्मरत्येष किं वा मन्नामकं परं । कमपीष्टमिति ध्यात्वा ततः प्रोचे महाबलः ॥ ८६ ॥ हे साहसिक कोऽसि त्वं किमित्थं पतितस्त्विह । उपलक्ष्य स्वरेणाथ सम्यक् तेनेति भाषितं ॥ ८७ ॥ कोऽसि त्वं कथमायातः कूपे किं पतितोऽनु मां । पृष्टव्योऽसीति पश्चाद्धोः प्रागेकं कुरु मे वचः ॥ ८८ ॥ स्वनिष्ठ्यूतेन मे भालतलं घर्ष यथा तव । पुण्यप्राप्यस्य वृत्तांतं स्वकीयं कथयाम्यहं ॥ ८९ ॥ स्वनिष्ठ्यूतेन तेनापि तस्य भालेऽथ घर्षिते । पुमान् सोऽथ प्रिया तस्य जज्ञे मलयसुंदरी ॥ ९० ॥ इतश्च कूपभित्तेस्तु सर्पेणास्यं कृतं बहिः । उद्योतितोंधकूपः स तच्छिरोमणिना तदा ॥ ९१ ॥ दुष्प्रापात्मप्रियालोकोत्कंठितोऽथ महाबलः । अकस्मात्तां पुरोऽपश्यत् प्रियां मलयसुंदरीं ॥ ९२ ॥ अनभ्राहो महावृष्टिर्यदेषा दृश्यसे प्रिये । भ्रामं भ्राममियत्कालं नैव लब्धा कुतोऽपि या ॥ ९३ ॥ अहो विधेर्नियोगो यदित्थमत्रांधकूपके । बभूवाचिंतितोऽकस्मात्तवापि मम संगमः ॥ ९४ ॥ ज-

लपन्नित्यादि मुंचंश्चाश्रूण्यश्रांतं महाबलः । उवाचामूलमाख्याहि प्रिये वृत्तांतमात्मनः ॥ ९५ ॥ सापि सर्वं स्ववृत्तांतं मुंचंत्यश्रुपरंपरां । दुःखसंपूर्णहृदया कंपमानतनुर्जगौ ॥ ९६ ॥ कुमारः स्माह वाष्पौघनिर्मितांधांधुजीवनः । त्वमप्येवंविधे हा हा पतिता व्यसनार्णवे ॥ ९७ ॥ वपुर्यष्ट्यानया भोगयोग्यया सुकुमारया । दुःखानि तानि सोढानि त्वया तन्वि कथं कथं ॥ ९८ ॥ शून्यारण्ये तदानेन पार्श्वात्ते व्यवहारिणा । जगृहे बालकः सोऽस्ति कुत्रेदानीं मम प्रिये ॥ ९९ ॥ सा स्माहात्रैव नगरे क्वापि मुक्तोऽस्ति तेन सः । ज्ञास्यते तु कथं पुत्रो मिलिष्यत्यावयोः कथं ॥ १०० ॥

कुमारोऽब्रूत चेत्कूपा--दस्मादावां कथंचन । निर्यास्यावस्तदा चिंता कर्त्तव्यैषाखिला खलु ॥१॥ विरहे मे त्वया नाथ वासरा गमिताः कथं । इति पृष्टस्तया सर्वं स वृत्तांतं निजं जगौ ॥ २ ॥ अन्योऽन्यालापपीयूषपानसंप्रीणितश्रुती । चिरेण संगतो यावत्तत्र तौ तस्थतुः सुखं ॥३॥ विभाता रजनी तावदागाच्चानुपदं नृपः । दृष्ट्वा द्वावपि कूपे तौ जगादैवं च विस्मितः ॥ ४ ॥ युक्ता प्रियेण केनापि नूनं मलयसुंदरी । एषा नैसर्गिकांगश्रीः स्नेहालापं वितन्वती ॥ ५ ॥ अनुरूपमहो रूपं सौभाग्यं यौवनं तथा । संयोगोऽप्येतयोर्युक्तः पंडितो भगवान् विधिः ॥६॥ देवदेव्योरिव स्वर्गे कामरत्योरिवोच्चकैः । इदं हि मिथुनं लोके सफलं

जन्म च तयोः ॥ ७ ॥ अभयं स्वामहो कूपाद्भुवां निर्यातमप्युभौ । इत्यूचे स पुनर्लुब्धः कंदर्पो दर्पकांधलः ॥ ८ ॥ रज्जुबद्धे उभे कूपे क्षेपयामास मंचिके । एते भोश्चटतं येनाकर्पयामीति चाह सः ॥ ९ ॥ अथो मलयसुंदर्या प्रोचे कंदर्प एप सः । ममानुपदमायातो राजा रागेण वल्लभ ॥ १० ॥

कामांधेनात्र येनाहं भूरिघस्रान् कदर्थिता । मयि लुब्धस्ततो नूनमयं त्वां मारयिष्यति ॥११॥ कुमारः स्माह चेत्कांते कूपादस्मात्कथंचन । निर्गतस्तत्करिष्येऽहं योग्यमेतस्य यद् ध्रुवं ॥ १२ ॥ मा भैषीस्त्वं द्रुतं भद्रे चटैका मंचिकां द्वयोः । इति ब्रुवन् कुमारः स आरुरोहैकमंचिकां ॥१३॥ ततस्ते मंचिके ऊर्ध्वं लग्नः कर्पयितुं नृपः । आत्मोच्छेदाय पातालादिव सर्पकरंडिके ॥ १४ ॥ कूपोपकंठमायाता यावन्मलयसुंदरी । तावन्मृदुगिरा राज्ञा सुखेनोत्तारिता बहिः ॥ १५ ॥ महाबलकुमारस्तूपकंठं यावदाययौ । मूर्त्तं काममिवा-लोक्य तावत्तं स व्यचिंतयत् ॥ १६ ॥ निस्सीमरूपलावण्यो यथैपोऽधिगतः प्रियः । सा किं विहीनरूपं मां मन्यते ताडिताप्यलं ॥ १७ ॥ ततो जीवत्ययं यावत्संमुखं वीक्षते मम । तावन्नैवेयमथवा मणिवांछा तृणे कथं ॥ १८ ॥ छुर्या छित्त्वा ततस्तेन रज्जुः प्रापत्ततः पुनः । कुमारः कूपतलकमनुगम्य प्रियामिमां ॥ १९ ॥ झंपां दातुं पुनः कूपे समुत्तालाथ सुंदरी । धृत्वा कृच्छ्रेण भूपेन निन्ये सा निजमंदिरं ॥ २० ॥

कः किं नामा वथं चैष मिलितस्ते कुतस्त्विह । इति पृष्टापि सा नाख्यत्केवलं रुदती स्थिता ॥ २१ ॥ आहारं नापि जग्राह सा मुमूर्छ च दुःखतः । यदि द्रक्ष्यामि तं भोक्ष्ये तदाहमिति चावदत् ॥ २२ ॥ कृत्वाथ यामिकायत्तां मुक्त्वा तां चैकमंदिरे । स्वयं जगाम राजा स कंदर्पो राज्यचिंतया ॥ २३ ॥

भविष्यति कथं कूपे निर्यास्यति कथं ततः । प्रियो मे चिंतयंतीति वासरं सात्यवाहयत् ॥ २४ ॥ रतिं नाप्नुवती कापि लुठती निशि भूतले । दष्टातिदुष्टसर्पेण निर्गतेन कुतोऽपि सा ॥ २५ ॥ मम पादतले लग्न एष दुष्टो भुजंगमः । जल्पंतीति चकारैषा गुरुदेवनमस्क्रियां ॥ २६ ॥ आगतैर्यामिकैस्तत्र निजघ्ने स भुजंगमः । तेभ्यो विज्ञाय तत्रागाद्व्याकुलः सोऽपि भूपतिः ॥ २७ ॥ कृता विषप्रतीकारा विशेषो नाभवत्पुनः । प्रत्युत क्ष्वेडकल्लोला बभूवुरधिकाधिकाः ॥ २८ ॥ इंद्रियाणां ततश्चेष्टा सर्वेषां नाशमागमत् । एक एवास्फुरच्छ्वासस्तस्या वपुषि केवलं ॥ २९ ॥ अनिच्छंतीव तां द्रष्टुं मन्येऽहं रजनी गता । सज्जितांगोमिवोद्धर्तुं व्युष्टेन स्फुरितं ततः ॥ ३० ॥ निःशेषनिष्ठितोपायस्ततो राजातिदुःखितः । पटहं वादयामासेत्युद्घोषणपुरस्सरं ॥ ३१ ॥ सज्जीकरोति यो बालामिमां गरलमूर्छितां । रणरंगं गजं कन्यां देशं चाप्नोति सोऽधुना ॥ ३२ ॥ न निषिद्धः स केनापि पटहः कापि पत्तने । निराशः स ततो जातः कंदर्पो नरनायकः

॥ ३३ ॥ अथैकेन कुतोऽप्येत्य नरेणाभिनवेन सः । पटहो विधृतः सोऽपि विधृतो नृपपुरुषैः ॥ ३४ ॥ अनेन पटहो देव धृतस्त्वरितमिति वादिभिः । नीत्वा क्ष्मापतेः पार्श्वे स पुमान् दर्शितस्ततः ॥ ३५ ॥ दृष्टो मलयसुंदर्याः स एवायमहो पुमान् । अंधकूपात्ततः पापः कथंकारं विनिर्ययौ ॥ ३६ ॥ केन देवहतेनैष परोक्षे मे बहिष्कृतः । को निर्गंतुं यतस्तस्मात्स्वयं शक्नोति कूपतः ॥ ३७ ॥ ध्यायन्निति नृपो मंक्षु विधायाकारसंवरं । ऊचे साधो विधेहि त्वं सज्जां मलयसुंदरीं ॥ ३८ ॥ येन तं रणरंगभं कन्यां देशं च ते ददे । सोऽप्यूचे नृप मा दास्त्वमपरं मम किंचन ॥ ३९ ॥ देहि देशांतरायातामेतां मलयसुंदरीं । क्षणमात्रेण येनाहं विदधामि निरामयां ॥ ४० ॥ संकटे पतितो राजा ततः स्माह ददेऽप्यदः । आदेशान् यदि मे कांश्चित्करोष्यनु नरोत्तम ॥ ४१ ॥ यद्वक्त्येष तदहं कृत्वा सत्वाधिकः क्षणात् । गृहीत्वा च निजां भार्यां गमिष्यामीति चिंतयन् ॥ ४२ ॥ प्रतिश्रुत्य नरेंद्रोक्तं ततोऽसौ नृपसंयुतः । पार्श्वे मलयसुंदर्या विषमूर्छायुजो ययौ ॥ ४३ ॥ युग्मं ॥ तदवस्थां ततो दृष्ट्वा दुर्लभां वल्लभामिमां । करोधाश्रुप्रवाहं स कुमारः प्रसभं निजं ॥ ४४ ॥ ऊचे चाहो नरेंद्रास्या बालायाः सर्वथा गताः । सर्वाश्चेष्टास्ततो नैव श्वासस्पंदोऽपि लक्ष्यते ॥ ४५ ॥ तथापि कारयाद्याय भूपतेऽत्र महीतलं । निरुद्धजनसंचारं सिक्तं चामलवारिणा ॥ ४६ ॥ राजा-

देशेन सर्वं तन्नियुक्तैर्विदधे नरैः । नृपो लोकोऽपि तत्स्थानाद्बहिर्झटिति तस्थिवान् ॥ ४७ ॥

एकाकिना कुमारेण प्रारेभे विषचालनं । आलिख्य मंडलं चक्रे मंत्रस्याप्यर्चनाविधिः ॥४८॥ कृत्वा ध्यानं महामंत्रं स्मृत्वा च कटिपट्टकात् । कृष्ट्वा मणिः कुमारेण क्षालितोऽमलवारिणा ॥४९॥ तद्वारि नेत्रयोस्तस्या यावत्तेन प्रचिक्षिपे । सा तावल्लोचने किंचिदुन्मीलितवती शनैः ॥ ५० ॥ ततः क्षिप्तं मुखे नीरं श्वासोऽपि स्फुरितस्ततः । युग्ममुद्घटितं चाक्ष्णोस्तयोः पुण्यमिव द्वयोः ॥ ५१ ॥ सिक्ता तेनाथ सर्वांगं मध्ये तद्वारि पायिता । समुत्तस्थौ कुमारस्यानंदपूरेण सा समं ॥५२॥ कुतस्त्वं प्रिय तस्माच्चांधकूपान्निःसृतः कथं । कथं चक्रे त्वया सज्जदेहाहं चेत्युवाच सा ॥ ५३ ॥ कुमार ऊचे भद्रेऽहं रज्जुच्छेदेन पातितः । यावत्कूपे स्थितस्तावत्सर्पस्तत्रैव सोऽभवत् ॥ ५४ ॥ कूपभित्तीस्ततः सर्वाः समंतात्पश्यता मया । दृष्टा द्वारे शिला तत्र स सर्पो यत्र संस्थितः ॥५५॥ गत्वा छन्नं ततो द्वारशिला सा मुष्टिना हता। द्वारमुद्घटे तत्र सर्पश्चागात् पराङ्मुखः ॥५६॥ यावद् द्वारेण तेनाहं प्राविक्षं साहसान्वितः। तावदग्रे फणी सोऽपि दीपिकाधरवद्ययौ ॥५७॥

नूनमेषा सुरंगात्राऽकारि चौरेण केनचित् । ततः पुरः क्वचिद् द्वारमस्या गुप्तं भविष्यति ॥ ५८ ॥ पुमानिव ज्वलद्दीपकरो ययात्यहिः पुरः । तन्ममाद्यापि जागर्ति कोऽपि पुण्यलवो ननु ॥५९॥ चिंतयन्नि-

त्यहं यावत्कियतीं भूमिकां गतः । तावत्सर्पः स नष्टो द्राक् ध्वांतं चोल्लसितं भृशं ॥६०॥ ध्वांतेऽप्यहं तथै-वानुव्रजन्नास्फालितोऽश्मनि । ततः पादप्रहारेणाहताऽलं सा शिला मया ॥ ६१ ॥ द्वारमुद्घटितं तस्मान्नि-र्गतेन मया वहिः । गर्भवासादिव प्राप्तं पुनर्जन्मेति चिंतितं ॥ ६२ ॥ किंचिद्विश्वासमायातः पश्यन्नहिपदं भुवि । गंतुं लग्नः प्रिये सावधानचित्तोऽहमग्रतः ॥ ६३ ॥ कियद्गतेन दृष्टोऽहिः शिलाकुंडलितो मया । वशीकृतस्य मंत्रेण तस्यात्तश्च शिरोमणिः ॥ ६४ ॥ गिरिनद्यां सुरंगात्र यदेषा पितृकानने । चौरस्थानं तदे-तद्धि स परं तस्करो मृतः ॥६६॥ जानन्नप्यात्मनोऽनर्थं नृपात्ते विरहं पुनः । अत्यर्थमक्षमः सोढुं प्रस्थि-तोऽहं पुरंप्रति ॥ ६७ ॥

आगां चात्र पुरे यावत्तावत् श्रुत्वा च डिंडिमं । मामिवाकारयंतं त्वां सज्जीकर्तुं विषाकुलां ॥ ६८ ॥ पृष्ट्वा ज्ञात्वा च वृत्तांतं लोकात्ते डिंडिमो धृतः। मणिनानेन सर्पस्य मया त्वं सज्जिता प्रिये ॥ ६९ ॥ मयै-षोऽपि नृपो वाक्यसंकटे पातितोऽस्ति यत् । कर्तव्या न त्वया काचिदनिवृत्तिस्ततः प्रिये ॥ ७० ॥ निःसं-देहमयं त्वां मे वितरिष्यति वल्लभे। सुधासिक्तेव संजज्ञे ततोऽसौ निर्वृता भृशं ॥ ७१ ॥ अथाहूतः कुमा-रेण राजाऽऽयातो विलोक्य तां । उपविष्टां प्रजल्पंतीं प्रमोदविवशोऽभवत् ॥७२॥ उवाच च शिरो धुन्वन्

कटरे शक्तिरस्य यत् । सुखेन सार्द्धमस्माकमस्याः प्रादायि जीवितं ॥७३॥ तव किं नाम भो ब्रूहि पृष्टे राज्ञेति राजसूः । तस्मै सिद्ध इति स्वीयनामधेयमचोकथत् ॥ ७४ ॥ कल्येऽपीयं न भुक्तास्ति किंचिद्बाला ततोऽधुना । जेमयोचितमेतां त्वमित्युवाच महीपतिः ॥ ७५ ॥

शर्कराक्षोदसंयुक्तमानाय्य क्वथितं पयः । कुमारेण स्वहस्तेन यथेष्टं पायिताथ सा ॥ ७६ ॥ कुमारेण नृपः प्रोचे गृहीत्वैनां व्रजाम्यहं । मां प्रेषय निजं चोक्तं कुरु त्वं सत्यवागसि ॥७७॥ रविवन्मेघवन्नीरराशिवच्च नरेश्वरः । नातिक्रामति मर्यादामन्यथैषा हता प्रजा ॥ ७८ ॥ अप्युक्तं पुरलोकेनार्पयेमामस्य बालिकां । तवास्तु भाषितं सत्यं मिळतां दुःखिताविमौ ॥ ७९ ॥ इत्यादिबोधितो गूढकोपवह्निः शमीव सः । क्षणं तूष्णिं क्षणं चक्रे वार्त्ता अन्याश्च भूपतिः ॥ ८० ॥ अपृच्छच्चैष हे सिद्ध तवैषा भवतीह किं । स समाह गृहिणी दैवाद्वियुक्ता मिलिताधुना ॥ ८१ ॥ अथोचे भूपतिः साधो कुर्वेकं मे प्रयोजनं । तथाहि मे शिरो नैव तुदत्तिष्ठति कर्हिचित् ॥ ८२ ॥ ततस्त्वं लक्षणैर्यादृक् तादृक्कोऽपि नरो यदि । लभ्यते दह्यते चापि निक्षिप्यांतश्चितं ततः ॥ ८३ ॥ रक्षा तस्याश्चिताया हि हरेत्पीडां शिरःस्थितां । त्वया संपादितं तन्मे भवत्वेव महौषधं ॥ ८४ ॥ नूनं मलयसुंदर्यां लुब्धोऽयं मां जिघांसति ।

प्रागेव याचितोऽनेन क्षुद्रादेशानहं ततः ॥ ८५ ॥ ततोऽयमकृते कार्ये भार्या मे नार्पयिष्यति । कार्यं पुन-र्विना मृत्युं कर्तुं शक्यं न केनचित् ॥ ८६ ॥ इति ध्यात्वा चिरं तेन समालंव्य च साहसं । ऊचे नरेंद्र चिंतेयं कर्त्तव्या कापि न त्वया ॥८७॥ मया संपाद्यमेतत्तेऽप्यतिदुर्लभमौषधं । समर्प्य मे परं भार्यां राज्यं कुर्याश्चिरं पटुः ॥ ८८ ॥ मिथ्या विहस्य सोऽवोचच्चित्ते दुष्टो नृपस्ततः । महोपकारिणे सिद्ध दातव्या ते प्रिया मया ॥ ८९ ॥ तयोः प्राहरिकान्मुक्त्वा जायापत्योः पृथक् पृथक् । हृष्टचित्तः स पापिष्टः क्ष्मापोऽगा-न्निजमंदिरं ॥ ९० ॥ प्रास्थापयत्कुमारोऽथ श्मशाने काष्ठसंचयान् । लोकोऽप्यूचे मुधा हा हा नररत्नं वि-नंक्ष्यति ॥ ९१ ॥ विहितांतिमशृंगारो वेष्टितो राजपूरुषैः । दिनस्य पश्चिमे यामे श्मशानं प्राप भूपभूः ॥ ॥ ९२ ॥ ज्ञात्वा व्यतिकरं लोकादूचे मलयसुंदरी । धिग् धिग् मे जन्म धिक् चेदं सौंदर्यं वपुषोऽखिलं ॥ ॥ ९३ ॥ येनैतस्य कुमारस्य पुंरत्नस्य महौजसः । सर्वत्राप्यहमेवात्र जातानर्थस्य हेतवे ॥ ९४ ॥ पुरा नाथ त्वमुत्तीर्णः सदैवापन्महार्णवात् । एतस्यामापदीदानीं पुनः स्यास्यसि हा कथं ॥ ९५ ॥ धृत्वा राज-भटैः क्षिप्तश्चिताकाष्ठेषु वल्लभ । प्रज्वालितेऽनले विष्वक् निर्यास्यसि कथं ततः ॥ ९६ ॥ जीवन्नेव चिता-वह्नेर्मध्ये प्रज्वलितः प्रिय । सर्वांगदाहपीडा त्वं सहिष्यसि कथं कथं ॥ ९७ ॥ एतस्त्वं किमिह स्वामिन्

ममाथ मिलितः कथं । त्वयात्रेत्याहिना दष्टा पापाहं जीविता च किं ॥ ९८ ॥ वहुप्रकारमित्यादि खिद्यमानाक्षिवारिभिः । दयिताय प्रयच्छंती जलांजलिमनारतं ॥९९॥ यदि द्रक्ष्यामि भर्त्तारं करिष्ये भोजनं ततः। इति निश्चित्य सा तस्थौ सर्वचेष्टाविवर्जिता ॥ ३०० ॥ युग्मं ॥

कुमारेणापि धीरेण संवीक्ष्येतस्ततो भुवं । गुर्वीं विरचयांचक्रे स्थाने चात्रेप्सिते चितां ॥ १ ॥ दृष्ट्वा तस्य कुमारस्य साहसं नागरो जनः । संभूयागत्य चात्यंतं दूनो भूपं व्यजिज्ञपत् ॥ २ ॥ न्यायोऽयं कियदेपोऽत्र देव रक्षामिपात्त्वया । हन्यते पशुवत्सिद्धः परोपकृतिकर्मठः ॥ ३ ॥ ततो वरमिमां वालामस्मै मा दास्म कर्हिचित् । एनं तथापि जीवंतं मुंच नो वचसा प्रभो ॥ ४ ॥ ततोऽभाणि नृपेणैषा न गृह्णात्यपि नाम मे । वीक्षते संमुखं नैव जीवत्यस्मिन्नरे तथा ॥ ५ ॥ ममेमां तु विना वालामात्मा तिष्ठति नो सुखं। पतितः संकटेऽमुष्मिन् भवामि तदहं कथं ॥ ३ ॥

ततो जीवाभिधानेन मंत्रिणाभाणि निर्दयं । अहो किंचिन्न कर्त्तव्यं वराको म्रियतामयं ॥७॥ नरेश्वरोऽपि मंत्री च महापापावुभाविमौ । महिलामात्रकार्येण नररत्नं हतो यतः ॥ ८ ॥ कुललोऽनर्थमेतौ यद्दुर्मती क्षारदंभतः । क्षार एवानयोर्मूर्ध्नि निश्चितं तद्भविष्यति ॥९॥ इत्यन्योऽन्यं ब्रुवाणः स लोकः स्वस्था-

नमीयिवान् । कुमारोऽपीष्टदेवानां चकार स्मरणं क्षणं ॥ १० ॥ हाहारवेण लोकानां सार्द्धं सुभटवेष्टितः । कुमारः काष्ठनिचितां प्रतस्थेऽथ चितांप्रति ॥ ११ ॥ लोकानां हृदये शोकः कुमारश्च चितांतरा । प्रविष्टो निर्गतश्चाशु तेषामश्रुभरस्तदा ॥ १२ ॥ प्रज्ज्वालितो नृपायुक्तैः समंताज्ज्वलनो नरैः । सार्द्धं समस्तलोकानामंगेष्वसुखवह्निना ॥ १३ ॥ प्रशशंस जनस्तस्य धीरत्वं ज्वलितेऽनले । सीत्कारमात्रमप्युच्चैरशृण्वन् भूपजन्मनः ॥ १४ ॥ अथ निर्ज्वलितप्राये ज्वलने राजपूरुषाः । स्वामिने कथयामासुर्यथाविहितमात्मनः ॥ १५ ॥ तस्यां रात्रौ नृपं मुक्त्वा जीवामात्यं च सर्वथा । निःशेषे नगरे तत्र निद्रा कस्यापि नाययौ ॥१६॥ प्रभातसमये जाते स सिद्धः क्षारपुट्टलं । कृत्वा शीर्षे समायासीत्संस्थानेन पुरे पुनः ॥ १७ ॥ दृष्ट्वा तं विस्मितो लोको जगादानंदितो भृशं । हंहो सत्पुरुषेदं किं शीर्षे त्वं चागतः कुतः ॥ १८ ॥ तस्याश्चित्तेर्गृहीत्वाहं भस्म भूपस्य हेतवे । आयातोऽस्मीति कथयन् स ययौ राजमंदिरं ॥ १९ ॥ ग रक्षामर्पयामास भूभुजे कथयन्निति । प्रक्षिप त्वं निजे शीर्षे रक्षां रोगः प्रयातु ते ॥२०॥ राजोचे किमहो सिद्ध न दग्धस्त्वं चिताग्निना । कुमारोऽचिंतयच्छद्म कर्त्तव्यं छद्मिनो ननु ॥ २१ ॥ ऊचे चाहं नराधीश दग्धः सत्वेन मे पुनः । समायाताः सुरास्तत्र सिक्ता तैः सुधया चिता ॥ २२ ॥ जीवितोऽहं पुनस्तेन गृहीत्वा भस्मपुट्टलं ।

तव योग्यमिहायातः कुरु त्वं निजजल्पितं ॥२३॥ राजा दध्यौ जनानां हि वंचयित्वा दृशो वहिः। स्थिते धूर्त्तेऽत्र चित्याया ज्वालितो ज्वलनो भटैः ॥ २४ ॥ ज्ञात्वाथ दयितं तत्रायातं मलयसुंदरी। आरक्षकयुता प्राप्ता हृष्टा चोत्कंठिता भृशं ॥ २५ ॥ एकांतं कारयित्वा च सर्वं पप्रच्छ तंप्रति। प्रविष्टोऽपि कथं नाथ न दग्धस्त्वं चिताग्निना ॥ २६ ॥ मंदं मंदं बभाषे स प्रियेऽहं निर्ययौ यदा। सुरंगया द्रुतं तस्मादंधकूपाद्भयंकरात् ॥ २७ ॥ सुरंगाया मुखे तस्या गुर्वी विरचिता चिता। प्रविष्टे मयि तन्मध्यं यदा प्रज्वालितोऽनलः ॥ २८ ॥ सुरंगायास्तदा द्वारमुद्घाट्यैतः प्रविश्य च। पुनर्विधाय तद्द्वारं तथैवाहं स्थितोंतरा ॥ २९ ॥

ज्वलन् ज्वलन् चितावह्नौ निर्वाणे द्वारमादरात्। उद्घाट्याहं च निर्गत्य क्षेमेणात्र समागमं ॥३०॥ इदं गुह्यं त्वया कांते प्रकाश्यं नैव कस्यचित्। येनैव भूपतिर्दुष्टो मम छिद्राणि पश्यति ॥ ३१ ॥ अत्रांतरे समागत्य नृपेणाभाणि सिद्ध भोः। अद्येमां भोजयात्मीयां भार्यां मलयसुंदरीं ॥३२॥ कथयित्वा ततस्तेन दयिता भोजिता निजा। पश्चादुक्तं मया राजंस्तव कार्यमसाध्यत ॥ ३३ ॥ तन्मां प्रहिणु गच्छामि भार्यामादाय संप्रति। सिध्यतात्प्रतिपन्नं ते माऽनेशत्सूनृतं व्रतं ॥ ३४ ॥ नृपेण प्रेषिता दृष्टिर्जीवामात्यस्य संमुखं। क्षणं विमृश्य मंत्री स ततो लग्नः प्रजल्पितुं ॥ ३५ ॥ अहो सिद्ध त्वया तावत्कृतमेकं प्रयोजनं।

द्वितीयं चापि भूपस्य कुरु सत्त्वमहोदधे ॥ ३६ ॥ पुरस्यास्यैव नेदिष्टे छिन्नटंकाभिधे गिरौ। चूतवृक्षः समस्त्यस्य प्रस्थमारोह्यमुच्चकैः ॥३७॥ उपरिष्टात्तस्य चूतस्य देया झंपा ततस्त्वया। फलान्यादाय दातव्या पुनर्झंपा भुवंप्रति ॥ ३९ ॥ पश्चादत्र समागत्य फलान्येतानि भूभुजे। अर्पणीयानि येनास्य पित्तपीडोपशाम्यति ॥४०॥ ततो दध्यौ कुमारोऽयं क्षुद्रादेशोऽतिदुष्करः। मर्त्तव्यं हि मया तत्र बुद्धिः कापि न विद्यते ॥ ४१ ॥ कार्येऽस्मिन्नकृतेऽनाप्तभार्योऽहं मृत एव तत्। द्वाभ्यामपि प्रकाराभ्यामथ मृत्युः स्थितं मम ॥४२॥ कुतोऽपि चेद्विधिवशात्क्षुद्रादेशं करोम्यमुं। तज्जीवितं कलत्रं च द्वयमप्यस्ति मेऽधुना ॥ ४३ ॥ ध्यात्वेत्युवाच हे मंत्रिन् राजकार्यं करोम्यदः। इति ब्रुवन् कुमारो द्रागुत्तस्थावासनाद्द्रुतं ॥४४॥ पतत्सु दुःखपूरेण दयिता नयनाश्रुषु। कुमारश्छिन्नटंकाख्यं प्रतस्थे तं गिरिंप्रति ॥ ४६ ॥ यथायथाद्रिमारोहत्कुमारः स तथा तथा। लोकानां हृदये शोको हर्षश्चामात्यभूभुजोः ॥ ४५ ॥ पर्वताग्रं स आरुढ उदयाद्रिमिवार्यमा। ततो नृपनरैस्तस्य दूरे चूतः स दर्शितः ॥४७॥ न्यायस्थितेन यत्किंचिन्मयास्ति शुभमर्जितं। ततस्तस्य प्रभावेण सफलं मेऽस्तु साहसं ॥ ४८ ॥ इति जल्पन् रसालं तं लक्ष्यीकृत्य स साहसी। झंपासंपातमातेने लोकहाहारवे सति ॥ ४९ ॥ पतन् वेगेन शृंगात्स क्षणेनागाददृश्यतां। कुमाराऽहितकर्तॄणां मूलतः

पुण्यराशिवत् ॥ ५० ॥

अहो अन्याय आः पाप मिलितानि पृथक् पृथक् । भूत्वा क्वचिद्धविष्यंति गतान्यमिलितानि ही ॥ ॥ ५१ ॥ इति ब्रुवंतस्ते सर्वे शंकमानास्त्वमंगलं । नरेंद्रस्य पुरस्यापि व्यावृत्य स्वगृहान् ययुः ॥ ५२ ॥ राजपुंभिः समाख्याते निःशेषे नृपमंत्रिणौ । कृतार्थं मन्यमानौ स्वं गमयामासतुर्निशां ॥ ५३ ॥ संजातेऽथ प्रभाते स सिद्धो मध्ये पुरं वहन् । शिरस्याम्रफलापूर्णं करंडं पुनरराययौ ॥ ५४ ॥ महात्मा जीवितो नूनमेष देवानुभावतः । कृतभूपालकर्त्तव्यः क्षेमेणात्र समागतः ॥ ५५ ॥ ब्रुवाणैरिति हृष्टास्यैर्विस्मितैर्मिलितैः पथि । अनेकधा पृच्छ्यमानः स्थाने स्थाने पुरीजनैः ॥ ५६ ॥ प्रष्टव्यो नाधुना किंचिद्युष्माभिस्तानिति ब्रुवन् । जनैः परिवृतो राज्ञः समीपे स ययौ पुमान् ॥ ५७ ॥ त्रिभिर्विशेषकं ॥ कृष्णास्येनातिभीतेन विस्मितेन च भूभुजा । यावन्नाभाषितः किंचित्स पुमांस्तत्र संसदि ॥ ५८ ॥ मंत्रिणा तावदाख्यायि कृत्वा कार्यं सुदुष्करं । हे सिद्ध त्वं किमायासीः कुशलेनात्र सत्वरं ॥ ५९ ॥ एवमित्यालपन्नेष शीर्षादुत्तार्य मुक्तवान् । सहकारकरंडं तं तयोरासीनयोः पुरः ॥ ६० ॥ ऊचे चैतानि चूतस्य फलान्यादध्वमत्त च । यूयं कुटुंबसंयुक्ताः पित्तं शाम्यंतु सर्वथा ॥ ६१ ॥ भीताः सर्वेऽपि मौनेन यावत्तस्थुर्नृपादयः । ताव-

दुद्घाटयांचक्रे सिद्धेनाम्रकरंडकः ॥ ६२ ॥ द्वित्रीण्यादाय चूतानि भूपमापृच्छ्यचागमत् । पार्श्वे मलयसुंदर्या दुःखिताया नृपात्मजः ॥ ६३ ॥ ततोऽसौ हृष्टहृदया मयूरीव घनागमे । प्रतिपत्तिं विधायोच्चैः पप्रच्छोदंतमेतकं ॥ ६४ ॥ स स्माह वल्लभे पूर्वं यो योगी वह्निकुंडके । दग्धः परिचितो मे स मृत्वात्र व्यंतरोऽभवत् ॥६५॥ स चूते निवसत्यत्र भागधेयेन नौ प्रिये । प्रजल्पन्निपतंश्चापि तेनाहमुपलक्षितः ॥ ६६ ॥ स्वकराभ्यां ततस्तेन धृतोऽहं चपलं पतन् । उक्तश्चोपकृतेः कर्त्ता मा भैस्त्वं नृपनंदन ॥ ६७ ॥ आत्मीयः कथितस्तेन वृत्तांतः स्वो मयापि च । इति संलपतो रात्रिर्व्यतीयायावयोर्द्वयोः ॥ ६८ ॥ व्यंतरेण ततस्तेनाभाणि त्वं भो ममातिथिः । कुमारेष्टातिथे किं किं तवातिथ्यं करोम्यहं ॥ ६९ ॥ मयोचे कार्यसंसिध्द्या कंदर्पस्य नरेशितुः । निर्व्यूढागूर्यथाहं स्यां विधेहि त्वं तथा सुर ॥ ७० ॥ ततोऽभाणि सुरेणैष नृपतिस्त्वां जिघांसति । शिक्षयाम्यहमेनं तद्यदि ते संमतं भवेत् ॥ ७१ ॥ मयोक्तमियताप्येष विरुद्धव्यसनाद्यदि । न निवर्त्स्यति तत्सर्वमपि तस्य विधास्यते ॥ ७२ ॥

यदा कदापि दुःसाध्यं किंचित्ते स्यात्प्रयोजनं । तदाहं स्मृतमात्रोऽपि करिष्यामि सहायतां ॥७३॥ इत्युक्त्वा तेन चानीय कुतोऽप्येकः करंडकः । गृहीतैश्चूततस्तस्मात्कलैराम्रफलैर्भृतः ॥ ७४ ॥ गृहीत्वाथ

करंडं तं मां चागाम्नगराद्वहिः । स देवोऽवददेवं च प्रति मां तत्र संस्थितः ॥ ७५ ॥ कुमारैनं करंडं त्वं नीत्वार्पय महीपतेः । समेष्यामि त्वया सार्द्धमहमंतर्हितः पुनः ॥ ७६ ॥ तत्र प्राप्तस्य यद्यन्मे भविष्यत्युचितं पुनः । तत्तत्सर्वं करिष्यामि तस्य प्रच्छन्नसंस्थितिः ॥ ७७ ॥ मयानीय करंडः स ततो राज्ञे समर्पितः । अनुज्ञाप्य च भूपालमहं पश्चादिहागमं ॥ ७८ ॥ ततस्तस्य करंडस्य मध्यादुच्छलितः किल । नृपं स्वादाम्यमात्यं वा पुनः पुनरिति स्वरः ॥ ७९ सिद्धोऽयं निश्चितं कोऽपि गूढात्मा सिद्ध एव यत् । दुष्कराण्यपि कार्याणि करोतीदृशि लीलया ॥ ८० ॥ तदत्र फलदंभेन नूनमेषा विभीषिका । काप्यानीयामुना मुक्ताऽत्रास्माकं क्षयकारिणी ॥ ८१ ॥ जल्पंतमिति तं भूपं चकितं सचिवो हसन् । विभीषिकामुखे धूलिस्तदोच्चैः कथयन्निति ॥ ८२ ॥ अहंयुर्वार्यमाणोऽपि यावत्तस्यांतिकं ययौ । तावच्छुश्राव तं शब्दं स मृत्योर्दुंदुभेरिव ॥ ८३ ॥ युग्मं ॥

ततो यावत्स्वहस्तेन तेनाथ फलवांछया । द्वारमुद्घाटितं तस्य स्वस्याऽपुण्यनिधेरिव ॥ ८४॥ तावत्कृतांतधाटीव त्रासयंती जनं द्रुतं । वज्रानलमहाज्वाला तन्मध्यादुत्थिता पुरः ॥ ८५ ॥ दग्धः पतंगवद्दुष्टस्तया वज्राग्निकीलया । सहसा सचिवः सेप जीवो निर्जीवतामगात् ॥ ८६ ॥ लग्नः काष्ठेषु सौधस्य

दग्धुं प्रारब्धपावकः । ततो भीतेन सिद्धः स नृपेणाकारितो द्रुतं ॥८७॥ मद्गृहेण सुरेणात्र कृतं किंचि-
द्भविष्यति । चिंतयन्निति सिद्धः स समागाद्राजसन्निधौ ॥८८॥ उदित्वा सर्वमेतस्मै राज्ञाऽवादि प्रसद्य
भोः । सिद्धास्मासु कृपां कृत्वाऽदः शांतिं नय विड्वरं ॥८९॥ भविष्यति कथं शांतिरिति चिंतयतामुना ।
सिद्धेनाक्षेपि तत्रांबु शांतोऽग्निः सर्वथा ततः ॥ ९० ॥ पिहितोऽथ करंडः स क्षेमेणास्थात्तथैव च । तस्या-
सन्ने परं कोऽपि भीत्या नास्थात्कथंचन ॥ ९१ ॥ अथोद्घाट्य करंडं तं स सिद्धः सात्विकाग्रणीः । ततः
क्षेमेण जग्राह सहकारफलोत्करं ॥ ९२ ॥ स्वहस्तेनार्पयामास राज्ञे विस्मितचेतसे । अन्येभ्योऽपि परं राजा
नाग्रहीत्तानि भीतितः ॥ ९३ ॥ धीरयित्वाथ सिद्धेन ग्राहितस्तानि भूपतिः । महामात्यपदे तस्याऽतिष्टि-
पज्ज्येष्टनंदनं ॥ ९४ ॥ नृपः पप्रच्छ हे सिद्धोच्छलितं किमिदं भयं । येनैवं गमितो मार्गं महामात्यो
ममैष हा ॥९५॥ सिद्धः स्माह नराधीश तवाऽन्यायतरोरयं । अंकूरोऽतःपरं पुष्पं फलं चानुभविष्यसि ॥९६॥
यतो ये पालयंत्यत्र नृपा न्यायं महीतले । नाप्नुवंत्यापदां लेशमपि ते स्फीतसंपदः ॥ ९७ ॥ ततो वि-
सृज मामद्य स्वभार्यासंयुतं नृप । पालयासादितं राज्यं निष्प्रत्यूहमिदं कुरु ॥ ९८ ॥ सामंताद्यास्ततः
प्रोचुः कुरु स्वामिन्निदं वचः । अनयेनैव यत्साधुर्युक्तः कोपयितुं न हि ॥ ९९ ॥ ततो मलयसुंदर्यामनु-

नरिं

रागवशंवदः । नृपो द्ध्यावसो सिद्धः शक्तिमान्मंत्रतंत्रवित् ॥ ४०० ॥ एष वाह्यानि कार्याणि साधयामास लीलया । कारयामि ततः स्वांगे किंचित्कार्यं सुदुष्करं ॥ १ ॥

करिष्येऽहं तथा नांगं यथायं कारयिष्यति । पश्चादकृतकार्यस्तां कथं याचिष्यते प्रियां ॥ २ ॥ एवं कृतेऽत्र मे किंचिन्निंदापि न भविष्यति । ध्यात्वेत्युवाच हे सिद्ध अर्पयिष्यामि ते प्रियां ॥ ३ ॥ किंतु त्वं वहु सामर्थ्यस्तवासाध्यं न किंचन । तृतीयं कुरु कार्यं तत् पूर्वं यन्मेऽस्ति मानितं ॥ ४ ॥ पश्याम्यहं स्वनेत्राभ्यां सर्वांगं न तु पृष्टकं । तत्त्वं कुरु तया वीक्षे यथा तदपि मध्यवत् ॥ ५ ॥ क्षुद्रादेशानहो एष वितरन्नेव तिष्ठति । ध्यायन्निति कुमारः स साक्षेपमिदमब्रवीत् ॥ ६ ॥ नेक्षते कोऽपि पृष्टं स्वमसद्ग्राहस्तदेष किं । स्वपृष्टदृष्टौ ते कीदृक् कार्यसिद्धिर्नराधिप ॥ ७ ॥ ततः सिद्धो नरेंद्रस्य ग्रीवानाडीं तथा वलात् । आचकर्षातिरोपेण दंतैर्दंतान्निपीडयन् ॥ ८ ॥ यथा भ्रांत्वा मुखं जातं घटस्थानेऽस्य तत्क्षणात् । मुखस्थाने पुनर्यत्र न्यस्तेवाथ कृकाटिका ॥ ९ ॥ विलोकय निजं पृष्टं सिध्यत्विष्टं नरेंद्र ते । इति जल्पति सिद्धे स चुकोप सचिवो नवः ॥ १० ॥ अन्यायकूटवसते हंहो धूर्तशिरोमणे । हतो मज्जनकस्तावज्जीवो मंत्रीश्वरस्त्वया ॥ ११ ॥ अस्माकं पश्यतां राज्ञो दुःखावस्थाप्यसौ कृता । भविष्यतीह किं किं न ततस्त्व-

ततोऽसमंजसं ॥ १२ ॥ इतश्चाकर्ण्य वृत्तांतं तं सर्वमपि भूपतेः । भीतास्तत्रायुयुर्भूपभार्याः सर्वा अपि द्रुतं ॥ १३ ॥ दृष्ट्वा ताः स्वामिनं दुःस्थमपूर्वाकारधारिणं । प्रक्षिपंत्यो मुखे पंचाप्यंगुली रोदनान्विताः ॥ १४ ॥ अतिदीनस्वरेणैवं सिद्धस्याभिमुखं जगुः । कोपं मुंच प्रसीदाशु सुसाधोऽस्मासु संप्रति ॥ १५ ॥ यादृशोऽभूनृपो मूर्त्या तादृशं कुर्वमुं पुनः । अस्मभ्यं पतिभिक्षां त्वं देहि कारुण्यमंदिर ॥ १६ ॥ त्रिभिर्विशेषकं ॥ प्रत्यक्षं सर्वलोकानामेष दुःखं हि संगतः । परिणामं निजं दुष्टं त्यक्षतीति विचिंतयन् ॥१७॥ सिद्धो जगाद यद्येष स्वपादाभ्यां पुराद्वहिः । संस्थितं जिनमानम्य पुनरागच्छतीह च ॥ १८ ॥ युग्मं ॥ सज्जितांगस्तदेष स्यात् पतिर्वो नान्यथा पुनः । ततोऽशक्तोऽपि भूपः स तत्र गंतुं प्रचक्रमे ॥ १९ ॥ कौतूहलेन पुर्लोके चटितेऽट्टगृहादिषु । स्थाने स्थाने तथा पुंजीभूते भूपश्चचाल सः ॥ २० ॥

ऋजुपद्भ्यामचालीच्च अपश्यन्मार्गकं पुरः । पदे पदे स्खलन् राजा दुःखेन महता ययौ ॥ २१ ॥ विपरीतांगपादेन पश्यन्मार्गं चचाल सः । ययौ तथापि दुःखेन प्रेरणाभां विडंबयन् ॥ २२ ॥ द्वाभ्यामपि प्रकाराभ्यां जनयन्निति कौतुकं । केषां दुःखं च केषांचित् स गत्वा पुनरागमत् ॥ २३ ॥ प्रत्यक्षं सर्वलोकानां पापोऽयमिति न्यक्कृतः । निर्वर्त्स्यत्यधुना नूनं दुष्टाद्ध्यवसायतः ॥ २४ ॥ ध्यायन्नित्यपरां नाडीं

कंधरायाश्चकर्ष सः । नरेंद्रस्य ततो वक्त्रं वलित्वा स्थानमागतं ॥ २५ ॥ अवरोधस्ततः सिद्धं प्रशशंस प्रमोदभाक् । ऊचे च प्रार्थयस्वाहो यत्ते किंचन रोचते ॥ २६ ॥ स स्माहैकामिमामेव भार्यां मलयसुंदरीं । मह्यं दापयतास्तीह यदि शक्तिलवोऽपि वः ॥ २७ ॥ ततस्ताभिर्भृशं प्रोचे प्रत्युचे न पुनर्नृपः । दध्यौ देया कथं स्याप्या यांती मलयसुंदरी ॥ २८ ॥ अत्रांतरे समुत्तस्थौ मंदुरायां हुताशनः । दारुणः पूरयन् ज्वालासहस्त्रैर्गगनांगणं ॥ २९ ॥ ततः प्रोचे नरेंद्रेण वरो मम तुरंगमः । दह्यते सिद्ध तं कर्षे कुरु तुर्यं प्रयोजनं ॥ ३० ॥ प्रियामादाय गच्छेस्त्वं पश्चाद्यैव वांछया । ततोऽब्रूत जनोऽद्यापि कुग्राहं न नृपोऽस्यति ॥ ३१ ॥ एतावतापि यद्दुष्टाध्यवसायं जहाति न । पापोऽयं तदमुष्यात्र योग्यं कर्त्तुं करोमि तत् ॥ ॥ ३२ ॥ ध्यायन्निति कुमारोऽथ प्रवेष्टुं तं हविर्भुजं । उत्पन्नद्विगुणोत्साहो बभूव प्रगुणः क्षणात् ॥ ३३ ॥ हाहाकारपरे लोके बहुधा वारयत्यपि । मनसा भूपतिं भूरि निंदत्याक्रोशति क्रुधा ॥ ३४ ॥ कुमारः स्मृतदेवः स चिंतितात्ममनोरथः । पतंगवत्पपाताग्नौ लोकानामश्रुभिः समं ॥ ३५ ॥ युग्मं ॥ संतुष्टे नृपतौ लोके स्फुरच्छोकभरे तथा । क्षणमात्रेण सिद्धः स निर्ययौ ज्वलनात्ततः ॥ ३६ ॥ वासवाश्वोपमाश्वाधिरूढोऽत्यंतवपुर्महः । संवीतदिव्यवसनः सर्वालंकारभासुरः ॥ ३७ ॥ जनयन् विस्मयं सिद्धो वक्तुमेवं प्रच-

क्रमे । ददर्द्धर्पविषादौ च व्यत्ययाल्लोकभूपयोः ॥ ३८ ॥ युग्मं ॥

अहो एषा ज्वलद्वह्निपवित्रा सर्वकामदा । भूमिर्यत्पतितोऽत्राहमश्वोऽप्येवं बभूव च ॥३९॥ आवयोर्न कदापीह रुग् जरा च मृतिस्तथा । भविष्यत्यन्यदप्यत्र प्रविष्टैरिष्टमाप्यते ॥ ४० ॥ ततस्तत्र प्रवेशाय राजान्येऽपि समुद्यताः । सिद्धेनोक्तं ततो भो भोः क्षणमेकं विलंब्यतां ॥ ४१ ॥ पूजयाम्यनलं यावद्विधिवत्तीर्थमप्यथ । आनाय्याज्यादि चिक्षेप कूटमंत्रपुरस्सरं ॥ ४२ ॥ अहं पूर्वं प्रवेक्ष्यामीत्युक्त्वा ध्यात्वा च वांछितं । प्राविशत्सहसा राजा सचिवोऽपि ततो द्रुतं ॥४३॥ कुमारो वारयामास सर्वान् प्रविशतः परान् । विलंब्यतां क्षणं राजमंत्रिनिर्गम ईक्ष्यतां ॥ ४४ ॥ न निर्गतो चिरेणापि यावत्तौ तावदूचिवान् । जनः सिद्ध यथा त्वं किं नायातौ नृपमंत्रिणौ ॥ ४५ ॥ सोऽवोचज्ज्वलनात् किं भोः कदाचित्कोऽपि निर्गतः । अहं तु कृतसान्निध्यः संतुष्टेन सुपर्वणा ॥ ४६ ॥ जनो जगाद हुं ज्ञातं वैरं स्वं वालितं त्वया । फलितोऽन्यायवृक्षोऽयं सपुत्रामात्यभूपयोः ॥ ४७ ॥ सामंताद्यैस्ततस्तत्र मंत्रयित्वा महानरैः । अराज्यार्हपरे राज्ये सिद्ध एव कृतो नृपः ॥ ४८ ॥

ततोऽसौ पालयन् राज्यं न्यायेन जनसंमतः । सिद्धराज इति ख्यातोऽरिवर्गं दमयन्नभूत् ॥ ४९ ॥

आगंतव्यं त्वया कार्यं स्मृतेन विषमे पुनः । इत्याभाष्य स सिद्धेन विसृष्टस्त्रिदशोऽगमत् ॥ ५० ॥ देशांतरादथायातो बलसारः स सार्थपः । तत्रोपायनमादाय नृपस्य मिलितो मुदा ॥ ५१ ॥ तेनोपलक्षिता तत्रासीना मलयसुंदरी । तयापि सार्थवाहः स ततो भीतो गृहं गतः ॥ ५२ ॥ अहो द्वीपांतरात्तस्मादिहैषा कथमागता । भार्याभावेन राज्ञोऽस्य कथं संघटिता तथा ॥ ५३ ॥ मयास्या यत्कृतं तच्चेद्राज्ञेऽसौ कथयिष्यति । शरणं मरणं तन्मे स दध्याविति दुःखितः ॥ ५४ ॥ ऊचे मलयसुंदर्या बलसारो नृपैष सः । अहं कदर्थिता येन गृहीतोऽस्ति सुतश्च मे ॥ ५५ ॥ मुद्रितानि क्रयाणानि सकुटुंबो धृतोऽथ सः । राज्ञा तस्यापराधोऽपि प्रोक्तस्तेनेति चिंतितं ॥ ५६ ॥ मोक्षो नैवास्ति मे किंतूपाय एकोऽत्र विद्यते । स सिद्धिं याति चेत्पुण्यैर्नूनं क्षेमं तदैव मे ॥ ५७ ॥ राज्ञोऽस्य सबलो वैरी सूरः परिचितो मम । चंद्रावत्याः पुरः स्वामी श्रीवीरधवलोऽपि सः ॥ ५८ ॥

निर्जित्यैनं नृपं मां स मोचयिष्यति सांप्रतं । तस्याहं मानयाम्यष्टौ द्रम्मलक्षाणि मानुषैः ॥ ५९ ॥ अष्टौ द्वीपांतराच्चे चानीताः संति गजा वराः । कथापयामि तस्याहं तानप्युत्तमलक्षणान् ॥ ६० ॥ दक्षः सोमाभिधस्तेन प्रेषितो निजपूरुषः । शिक्षयित्वा ततः सर्वं श्रीवीरधवलांतिके ॥ ६१ ॥ गच्छतार्द्धपथे तेन

रौद्राटव्यामुभावपि । प्राप्तौ तौ वीरधवलसूरपालाभिधौ नृपौ ॥ ६२ ॥ द्वयोरपि तयोर्येन राज्ञोर्लोकमुखान्नृपा । शुद्धिर्मलयसुंदर्या जाता युगपदीदृशी ॥ ६३ ॥ रौद्राटव्यां यतो दुर्गतिलकाख्यमहागिरौ । भीमपल्लीपतेः पार्श्वेऽस्ति सा मलयसुंदरी ॥ ६४ ॥ स्वस्वराज्यात्ततस्तत्रायातौ द्वावपि भूपती । ताभ्यां पल्लीपतिः सोऽथ लीलया दुर्जयो जितः ॥ ६५ ॥ वीक्षिता तत्र सर्वत्र ताभ्यां मलयसुंदरी । किंतु तस्याः पदमपि । दुर्लभाया अलाभि न ॥ ६६ ॥ नरेंद्रौ तौ ततो यावद्यास्यतः स्वपुरंप्रति । तावत्सोमेन विज्ञप्तः श्रीवीरधवलो नृपः ॥ ६७ ॥ तथा तथोदितं सर्वं बलसारस्य वाचिकं । राज्ञा वीरधवलेन द्रुतमंगीकृतं यथा ॥६८॥ तेनार्द्धं यच्छता ख्यातं सूरपालाय भूभुजे । सर्वं बहु मतं तेनाप्युल्लसल्लोभवार्द्धिना ॥ ६९ ॥ सदावयोरिदं वैरिगेहं कमपि तन्नचं । हत्वामुं नृपमेतस्य सर्वस्वं गृह्यतेऽधुना ॥७०॥ मंत्रयित्वेति तौ सिद्धराजस्योपरि भूपती । असंख्यबलसंयुक्तौ प्रचेलतुरुभावपि ॥ ७१ ॥ प्राप्तौ सागरतिलकपुरादारान्नरेश्वरौ । कंपयंतौ भुवं सैन्यभारैः कातरचित्तवत् ॥७२॥ दत्वा शिक्षां ततो दूतस्ताभ्यां प्राक् प्रहितो हितः । सागरतिलकाख्यस्य नगरस्य नरेशितुः ॥ ७३ ॥ दूतस्तत्र गतो द्वारपालेनांतः प्रवेशितः । कृत्वा प्रणाममेवं तं सिद्धराजं व्यजिज्ञपत् ॥७४॥ पृथ्वीस्थानाधिपः शूरः सूरपालो नरेश्वरः । चंद्रावतीपुरीस्वामी श्रीवीरधवलोऽपि च ॥७५॥

तौ द्वावपीह देव त्वामभियोद्धुं निरर्गलं । आयातौ प्लावयंतौ क्ष्मामिव पूर्वपरांबुधी ॥७६॥ बलसारस्त्वया योऽस्ति गृहीतः सार्थनायकः । तेन सार्द्धं महास्नेहोऽनयोर्हि नृपयोरपि ॥७७॥ सर्वेषां बांधवा दानाऽवदान्या व्यवहारिणः । वर्षंतो वारिदाः कं न प्रीणंति मधुरस्वराः ॥ ७८ ॥ मित्रवद्बंधुवत्पुत्रवदमुं व्यसनस्थितं । उपेक्षेते कथं सार्थवाहमस्मत्प्रभू प्रभो ॥७९॥ बलसारोऽयमावाभ्यां कृतस्नेहो भृशं सह । कुलिनो व्यवहारी च तन्मोक्तुं देव युज्यते ॥ ८० ॥

कथापयत इत्येतावस्माकं स्वामिनौ तव । मुच्यतामेष सत्कृत्य त्वया राज्यं च भुज्यतां ॥ ८१ ॥ क्षम्यतामपराधोऽपि तस्यैकोऽर्थवतो भृशं । छिद्यते फलितो वृक्षः किं पत्रैर्दूषितांगणः ॥ ८२ ॥ कक्षीकृतोऽस्मदीशाभ्यां दुर्निग्राह्योऽस्त्ययं धनी । गर्जत्सिंहं वनं द्रष्टुमपि किं कुंजरः क्षमः ॥ ८३ ॥ शूरोऽप्यल्पबलोऽसि त्वं तौ चासंख्यबलौ नृपौ । अपारे पारावारेऽस्मिन् मा भूस्त्वं सक्थुमुष्टिवत् ॥ ८४ ॥ मोचयिष्यत एवैनं त्वां पुनः शिक्षयिष्यतः । नृपौ द्वावपि सिंहे हि सज्जितांह्रौ गजेन किं ॥ ८५ ॥ मास्मभूराततायी त्वं लंकेश इव मा मुहुः । दीर्घं चिंतय कार्यं चार्जितं राज्यं चिरं कुरु ॥ ८६ ॥ इति दूतमुखात्सर्वं श्रुत्वा सिद्धनरेश्वरः । जनकश्वसुरौ तत्र ज्ञात्वायातौ च गूढहृत् ॥ ८७ ॥ हर्षेण प्रोल्लसद्रोमा रसेनेव

रणोद्भुवा । कृत्रिमाटोपसंयुक्तो दूतंप्रति जगाविति ॥ ८८ ॥ युग्मं ॥ यदि दूत प्रभू ते तौ बहुसैन्यावु-
भावपि । तत्किं न द्विभुजौ नैकदेहो किं वा न सैनिकैः ॥८९॥ रविरेकोऽपि ताराणां माहात्म्यं ग्रसते न किं
। गजेंद्राणां न किं दर्पं हरत्येकोऽपि केसरी ॥९०॥ अभीष्टोऽपि सुतो दुष्टः शिक्ष्यते न्यायिभिर्न किं। किं चेष्टो
भवतामेष यद्यस्माकं ततः किमु ॥ ९१ ॥ वलिभिः कलितौ मूर्ध्नि पलितौ न्यायवादिनो । त्वदीशौ मोच-
यंतौ तं लज्जेते नापराधिनं ॥ ९२ ॥ स्वीकृतान्यायिपक्षौ तौ कीदृशौ युधि मे पुरः । प्रदत्तोलूकसंचार-
निशातिमिरवद्रवेः ॥ ९३ ॥ विक्रामति हरौ कीदृक् स्फुरणं हरिणीशिशोः । विद्युत्पाते परित्राणं किं वृक्षेण
ग्रहेण वा ॥ ९४ ॥ शिक्षणीयोऽत्र रंकोऽथ राजाप्यन्यायतत्परः । राजधर्मोऽन्यथा कीदृगस्माकं न्यायकारिणां
॥ ९५ ॥ त्वत्स्वामिनोस्तदन्यायवतोर्नस्तत्तिलीनयोः । कर्त्तव्यास्ति रणे शिक्षा सा कौक्षेयकसाक्षिका ॥९६॥
रणाजिरे तयोः सर्वानचिंतितमनोरथान् । पूरयिष्यामि हे दूत राज्ञोः सपरिवारयोः ॥ ९७ ॥ तथाहि सज-
यस्त्वैतो प्राप्तश्चाहमिति ब्रुवन् । शीघ्रं संग्रामिकीं ढक्कां ताडयामास सिद्धराट् ॥ ९८ ॥ कथयित्वा रहस्यं
तद्राज्ञी मलयसुंदरी । आज्ञादानेन तत्रैवावासे संस्थापितामुना ॥९९॥ चतुरंगचमूयुक्तो रणरंगेभसंस्थितः ।
सिद्धराजः प्रमोदेन पूरितो निःसृतः पुरात् ॥ ५०० ॥ रणतूर्यरवोऽथाभूत्सैन्ययोरुभयोरपि । सर्वान् वधि-

रयन् लोकान् ब्रह्मांडं स्फोटयन्निव ॥ १ ॥

विवशे ते रसेनाजुर्युयुधाते उभे बले। वर्ण्यमाने महाभटैः सुभटानां पराक्रमे ॥ २ ॥ शस्त्रतेजोजला क्रीडद्राजहंसाऽसिवीचिका। पुंडरीकयुताराजदाजिभूः सिंधुवत्तदा ॥ ३ ॥ वचनस्य वचोघातं घातस्यातिसुदुस्सहं। सिंहनादं तथा सिंहनादस्यापि भटा ददुः ॥ ४ ॥ गोत्रं जातिर्भुजादंडविक्रमोद्भूतकर्म च। प्रोद्घटयंते मिथस्तत्र जयश्रीलंपटैर्भटैः ॥ ५ ॥ वीरोत्तमांगचिकुरा रणरंगोत्थिता बभुः। मनःप्रज्वलितक्रोधानलोत्थधूमपुंजवत् ॥ ६ ॥ संग्रामरसरोमांचैर्भिन्नादंशानवायुधैः। मध्यभेदो यतो बाह्यभेदात्स्याद्प्रतिक्रियः ॥ ७ ॥ कृपाणे विंवितेऽप्यंगे कंपे वीरव्रतांकक्तृ। इत्याकृष्य कृपाणांस्ते माधुन्वन् सुभटोत्तमाः ॥ ८ ॥ स्वर्गांगनोत्सुकैरेभिरहं तिमिरवान् कृतः। ररक्षार्कः करव्याजाम्रियमाणान् भटानिति ॥ ॥ ९ ॥ रथिनो रथिभिः सार्द्धं सादिनः सादिभिः सह। गजारोहा गजारोहैः समं तत्र दुढौकिरे ॥ १० ॥ शरैरंतरिते सूर्ये रणे रात्रिकलान्विते। अन्योऽन्यशस्त्रसंघट्टाग्नयो भांतिस्म दीपवत् ॥ ११ ॥ प्रसरद्वाणसूत्कारे रणझल्लीभयंकरे। घूघूयमानसिल्लोघे खड्गखाट्कारदारुणे ॥ १२ ॥ मूर्छच्छुरीछणत्कारे दंडभाट्काभीषणे। त्रटत्त्रटितिकुर्वाणतनुत्राणगणे रणे ॥ १३ ॥ कंपिताः कातराः कामं शूराश्चोच्छ्वसिता भृशं।

उद्धुषितांगरोमाणः कृतपक्षा इवाजये ॥ १४ ॥ त्रिभिर्विशेषकं ॥

खड्गाखड्गि कचित्तत्र दंडादंडि शराशरि । कुंताकुंति तथा कापि प्रावर्त्तत गदागदि ॥१५॥ केशाकेशि तथा कापि दंतादंति तलातलि । मुष्टामुष्टि तथा कापि मुद्गरामुद्गरि कचित् ॥ १६ ॥ ॥युग्मं॥ वर्त्तमाने रणेऽत्रेवं क्षयकालकलाभृति । सिद्धराजबलं भग्नं स्तोकत्वाद्दलितं ततः ॥१७॥ रणरंगगजारूढः स्थिरीकुर्वन्निजं बलं । हक्कया त्रासयन्नन्यान् भटान् संग्रामलंपटान् ॥ १८ ॥ सिद्धराजस्ततो वेगात्स्वयं योद्धुं प्रचक्रमे । सूरपालस्तथा विश्वालंकारगजसंस्थितः ॥ १९ ॥ ॥ युग्मं ॥ संग्रामतिलकं नाम गजमारुह्य तत्क्षणात् । श्रीवीरधवलोऽप्युच्चैः प्रहर्त्तुमुपचक्रमे ॥ २० ॥ सिद्धराजस्मृतोऽथाशु संप्राप्तो व्यंतरामरः । आत्मानं ज्ञापयित्वा च साहाय्यं कर्त्तुमुद्यतः ॥२१॥ आयांति परशस्त्राणि गृहीत्वार्द्धपथेऽपि सः । अर्पयामास सर्वाणि सिद्धराजाय सत्वरं ॥ २२ ॥

शरासारं तदा मुंचन् सिद्धराजो घनाघनः । सर्वानुड्डाययामास राजहंसान् रणांगणे ॥२३॥ चिच्छेद कौतुकेनैष क्षुरप्रैः सायकैस्तयोः । चामराणि पताकाश्च छत्रचिह्नानि लीलया ॥२४॥ करात्तानि च शस्त्राणि मुहुर्मुहुरपातयत् । सिद्धराजस्तयो रक्षन् शरीरमुभयोरपि ॥ २५ ॥ निस्तेजस्कौ कृतौ तेन कविशुक्राविवैं-

दुना । तावुभावपि राजानौ चिंताब्धौ पतितौ ततः ॥ २६ ॥ सिद्धराजेन तौ वीक्ष्य वीक्षमाणा वधोभुवं। लज्जिताविव दुःखेन तदा कृष्णास्यपंकजौ ॥ २७ ॥ इत्थमित्थं च कर्त्तव्यं त्वयेत्युक्त्वामरस्य च । शरोऽकारि करे लेखोऽपि पूर्वं लिखितः स्वयं ॥ २८ ॥ युग्मं ॥ ततस्तेन शरो मुक्तो मुखे लेखं दधद् द्रुतं । नरेंद्रान्नामयन्मोहं जनानां जनयन् ययौ ॥ २९ ॥ इत्थमायांतमालोक्य तं भूपालावुभावपि । चित्ते चमत्कृतौ पृथ्वीस्थानचंद्रावतीपती ॥ ३० ॥ अवतीर्य नभोमार्गात्स शरोऽवततार च । प्रदक्षिणात्रयं सूरपालाख्यं परितो नृपं ॥३१॥ पुनः पुनः प्रणम्योच्चैर्नृपपादौ विमुच्य च । लेखं तत्र स पत्यागात्सिद्धराजकरं पुनः ॥ ३२ ॥ चरितं तस्य बाणस्य दृष्ट्वा सर्वेऽपि विस्मिताः । इत्यूचुर्ज्ञायते नैव परमार्थोऽस्य कश्चन ॥३३॥ सूरपालो गृहीत्वाशु लेखं तं निजपाणिना । छोटयित्वाऽक्षरश्रेणिं वीक्षांचक्रे पुनः पुनः ॥ ३४ ॥ परितो मिलिताः सर्वे लेखार्थं श्रोतुमुत्सुकाः । तूष्णीकां सैनिकाश्चक्रुः स्वयं राजा त्ववाचयत् ॥ ३५ ॥ स्वस्ति श्रीमति राजेंद्र सूरपालाजिभूतले । पूज्यान् श्रीसूरपालस्य तातस्यांह्रिसरोरुहान् ॥ ३६ ॥ श्रीवीरधवलस्यापि श्वसुरस्य विशेषतः । महाबलः प्रणम्यास्मात्सैन्याद्विज्ञपयत्यदः ॥ ३७ ॥ युग्मं ॥ युष्मत्प्रसादतोऽत्रैव प्राप्तराज्यपरिग्रहः । दर्शितात्मीयदोर्दंडवीर्यः पूज्यमनो मुदे ॥ ३८ ॥ अकुंठोत्कंठया तातपा-

दानां सुचरादहं । सुकृतेन मिलन्नस्मि विपादो वा ततः कथं ॥ ३९ ॥ युग्मं ॥ इति विज्ञातलेखार्था- स्ते सर्वे राजसैनिकाः । प्रमोदमेदुरस्वांता बभूवुस्तत्क्षणादपि ॥ ४० ॥ अहो विधेः प्रसन्नत्वमहो पुण्यानि नोऽधुना । यत्प्रियासहितो वत्सो मिलिष्यति महाबलः ॥ ४१ ॥ निर्गता नरकादद्य वयमद्यैव जीविताः । अस्माकमद्य चैतन्यमद्य चोन्मीलिता दृशः ॥ ४२ ॥ जल्पन्निति समं वीरधवलेन महीभुजा । सूरपालो महाराजोऽभिययौ तं महाबलं ॥ ४३ ॥ सिद्धराजोऽपि संवीक्ष्याऽऽगच्छंतौ तौ गुरू ततः । जगामाभिमुखं मंक्षु निःसीमविनयान्वितः ॥ ४४ ॥ त्रयोऽपि मिलितास्तेऽथ वैरिभावे गतेऽखिले । अंतरस्थे हृते बंधे प्रवाहाः पयसामिव ॥ ४५ ॥ मिथः प्रकाशितः स्नेहो बाष्पाविलविलोचनैः । तैः स कोऽपि न यो वक्तुं शक्यते निपुणैरपि ॥ ४६ ॥ ततस्तौ सिद्धराजेन निजदुर्गं प्रवेशितौ । नृपौ स्वस्वपरीवारयुतौ नीतौ नृपालयं ॥ ४७ ॥ रुदती दुःखसंस्मृत्या राज्ञी मलयसुंदरी । बहुधालापिता तत्र श्वसुरप्रमुखैर्जनैः ॥ ४८ ॥ कारिताः सिद्धराजेन भोजनादिक्रियास्ततः । ते सर्वे निर्वृता जाता जनकश्वसुरादयः ॥४९॥ पृष्टे पित्रा- दिभिः सर्वो वृत्तांतः कथितस्ततः । स्वः स्वो मलयसुंदर्या कुमारेणापि मूलतः ॥ ५० ॥ ईदृक्षेऽहो महादुःखे पतिता पुत्रिका मम । जाता राजकुलेऽप्येषा रुलिता रोरवत्पुनः ॥ ५१ ॥ हा वत्से स्वच्छहृदये कोमले

कुसुमादपि। सोढानि तीव्रदुःखानि त्वयामूनि कथं कथं ॥ ५२ ॥ बहुप्रकारमित्यादि शोचयंतः पुनः पुनः। अंगं मलयसुंदर्याः पित्राद्याः पाणिनाऽस्पृशन् ॥५३॥ सूरपालो जगादाथ वत्सेऽस्मिन् व्यसनार्णवे । प्रक्षिप्ता हि मयैव त्वमविचारेण पापिना ॥ ५४ ॥

तत्क्षंतव्यं त्वया सर्वं सुप्रसन्ना भवाधुना। जितकोपा त्वमेवासि ज्ञाततत्वा त्वमेव हि ॥ ५५ ॥ तवापूर्वा कृपा वत्स साहसं च मतिस्तथा। जनानुरागः शौर्यं च धैर्यं च सुकृतान्यपि ॥ ५६ ॥ इत्यादि बहुधा पुत्रं प्रशंसंतो महाबलं। पप्रच्छुः पितृमुख्यास्ते वत्स वत्सासुतः क्व सः ॥ ५७ ॥ गृहीत्वा तेन पापेन वणिजा स कथं कृतः। पुत्रः स्माह स एवात्र जनैरानाय्य पृच्छयते ॥ ५८ ॥ आनाय्य बलसारोऽथ दृढं निगडितः पदोः। भणितो दुर्मतेऽसभ्यमपराद्धं बहु त्वया ॥५९॥ ततो यद्भवतो युक्त विधातुं तद्विधास्यते। परं तावद्वदास्माकं कथं पुत्रः कृतस्त्वया ॥ ६० ॥ ततो भीतेन तेनोचे सकुटुंबाय मे यदि। जीवितं यच्छत स्वामिंस्तदा पुत्रं समर्पये ॥ ६१ ॥ हृष्टचित्तैस्ततः सर्वैर्वचने तस्य मानिते। गुप्तस्थानात्कुतोऽप्याशु तेनानीतः स बालकः ॥ ६२ ॥ सर्वे तं बालमालोक्यानंदिताः सहसाऽभवन्। प्रावृषेण्यं मयूरोघा घनाघनमिवोन्नतं ॥ ६३ ॥ राज्ञोचे बलसारः स कुमारस्यास्ति नाम किं। उक्तं तेन महाराज बल

इत्यभिधा व्यधा ॥ ६४ ॥ इतश्चांके धृतो राज्ञा सूरपालेन सोऽग्रहीत् । दीनारैकशतग्रंथिं पितामहकरस्थितां ॥ ६५ ॥ पितामहेन तन्नाम तस्य चालयता तदा । समक्षं सर्वलोकानां चक्रे शतवलाभिधा ॥६६॥ तस्य सर्वस्वमादाय जीवन्मुक्तः स सार्थपः । सकुटुंबः कृतं भूपैरेतैरात्मीयभाषितं ॥ ६७ ॥ सूरपालो जगादाथ किंचित्समधिकं किल । वर्षं वियोगभाजोऽस्य वत्सायास्तद्दिनादभूत् ॥ ६८ ॥ वर्षांते सह कांतेन नूनं मलयसुंदरी । मिलिष्यतीति तद्ज्ञानिवचनं मिलितं पुनः ॥ ६९ ॥ सिद्धराजेन तत्सर्वं राज्यं निजभुजार्जितं । सूरपालनरेंद्राय जनकाय समर्पितं ॥ ७० ॥ मिथः स्नेहेन तौ यावत्सकुटुंबावुभावपि । राजानो राजकार्याणि कुर्वाणौ तत्र तस्थतुः ॥ ७१ ॥ तावत्तत्र समायातो विहरन् भुवि केवली । भवांतरकृतप्राणिपुण्यपापैकदर्पणः ॥ ७२ ॥ शिष्यः श्रीपार्श्वनाथस्य नाम्ना चंद्रयशा गुरुः । बहुसाधुपरीवारो बोधको निर्वृते जिने ॥ ७३ ॥ युग्मं ॥

सकुटुंबावुभौ भूपौ तौ विज्ञाततदागमौ । जग्मतुर्वंदितुं सूरिं सर्वपौरजनान्वितौ ॥ ७४ ॥ केवली कथयामास धर्मं भवनिवारकं । ततः प्रस्तावमासाद्य पृष्टं सूरेण भूभुजा ॥ ७५॥ भगवन् सागरस्यांतःपतितापि झपोपरि । सुखेनोत्तारिता तेन कथं मलयसुंदरी ॥ ७६ ॥ गुरुरूचे विपद्यास्या धात्री वेगवती

नृप। कुध्यानादंबुधेर्मध्ये करिरूपो झषोऽभवत् ॥७७॥ भारंडास्याततः स्रस्ता तदा मलयसुंदरी। पठंत्यु-च्चैर्नमस्कारं तस्यैवोपरि सापतत् ॥ ७८ ॥ नमस्कारं निशम्येहापोहं तस्य वितन्वतः। मत्स्यस्याजनि पूर्वस्या जातेर्ज्ञानं विधेर्वशात् ॥ ७९ ॥ वालयित्वा ततो ग्रीवां यावत्पृष्ठमभीक्षितं। तेनोपलक्षिता तावत् सुता मलयसुंदरी ॥ ८० ॥ सुताया हंत जाताऽस्या दुःस्थावस्था किमीदृशी। किं करोम्यसमर्थोऽहं सर्वोपकृतिकर्मसु ॥८१॥ तद्वसंतीं भुवं नीत्वा मुंचाम्येतामतो बहिः। पुनर्यदि मिलत्येषा कथंचिद्बंधुभिः सह ॥८२॥ चिंतयित्वेति मत्स्येन तेनानीय सुखं सुखं। विमुक्तेषा तटेंभोधेर्यन्नास्त्यस्य गतिः पुरः ॥८३॥ वालयित्वा ततो ग्रीवां पश्यन्नेतां पुनः पुनः। खिद्यमानो भृशं मत्स्यः सागरांतः स यातवान् ॥ ८४ ॥ अथ निष्पापमाहारं गृह्णन् ध्यातनमस्कृतिः। पूरयित्वा च मत्स्यायुः सुगतिं स गमिष्यति ॥ ८५ ॥

श्रुत्वेति वेगवत्यास्ते सर्वे तत्र भवांतरं। इत्यूचुर्विदधे स्नेहो जननीसदृशास्तया ॥ ८६ ॥ पुनः पप्रच्छ भूपालो भगवन् पूर्वजन्मनि। किं किं मलयसुंदर्या तद्भर्त्रा च विनिर्ममे ॥ ८७ ॥ यद्दुःखानीदृशान्याभ्यां द्वाभ्यामाप्तानि यौवने। गुरुरूचे महीनाथ सावधानैर्निशम्यतां ॥ ८८ ॥ तत्रैव नगरे पृथ्वीस्थाने गृहपतिः पुरा। प्रियमित्राभिधो जज्ञे समृद्धः पुत्रवर्जितः ॥ ८९ ॥ तस्य तिस्रः प्रिया रुद्रा भद्रा च प्रियसुंदरी।

रुद्रा भद्रा तु सौदर्यें अभूतां स्नेहले मिथः ॥९०॥ तयोर्द्वयोरपि स्नेहलेशोऽपि दयितस्य न । एकस्यामेव सुंदर्यां प्रेमास्यासीदकृत्रिमं ॥९१॥ ततस्ताभ्यां महाराटी न निवृत्ता कदाचन । द्वयोरपि तयोस्तत्र सुंदरीप्रियमित्रयोः ॥ ९२ ॥ प्रियमित्रस्य मित्रं तु नाम्नाभून्मदनः प्रियं । स पुनः सुंदरीलुब्धो नर्म चक्रे तया सह ॥ ९३ ॥ अथान्यदा सुरूपां तां रहःस्थां प्रियसुंदरीं । कामार्थं याचमानः स प्रियमित्रेण वीक्षितः ॥९४॥ ततः क्रुद्धेन सर्वं तद्बांधवानां निवेद्य तत् । निर्भर्त्स्य बहुधा तेन नगरान्निर्वासितः ॥ ९५ ॥

तत्रासीनास्ततः प्रोचुः स्थविराः सर्वमप्यदः । साक्षान्नस्तदहो किंचिद्र ज्ञानस्याऽविषयं न हि ॥९६॥ प्रियमित्रीयमित्येतत्प्रसिद्धमभिधानतः । गृहीतमपरैरस्मत्पुरेऽद्याप्यस्ति मंदिरं ॥ ९७ ॥ नृपः प्रोचे कथं जातः पुरान्निष्कासितोऽथ सः । गुरुरूचे चचालैकां मदनः ककुभंप्रति ॥ ९८ ॥ मूढो गच्छन्नटव्यां स निराहारो दिनद्वयं । तृतीये दिवसे प्राप मदनो गोकुलं पुनः ॥ ९९ ॥ क्षुधार्त्तेनामुना केऽपि चारयंतो महीव्रजं । गोपाला वीक्षिता दुग्धं प्रार्थयांचक्रिरे तथा ॥ ६०० ॥ दुग्ध्वापि तैः कृपावद्भिर्महिषीं पयसा भृतः । समर्पितो घटस्तस्मै पांथाय स्पृहयालवे ॥ १ ॥ इतो गत्वा समीपस्थं सरो दुग्धं पिबाम्यहं । इति जल्पन्ननुज्ञातो गोपैर्व्यानिवृतेऽथ सः ॥ २ ॥ द्वे दिने क्षुधितोऽतिष्ठमहमेतदतः पयः । कस्मैचिद्यदि दत्वा प्राग्

भुज्यते सफलं ततः ॥३॥ तस्येति ध्यायतश्चित्ते गच्छतः पुण्ययोगतः । मिलितः संयमी मासोपवासी पारणाय यान् ॥ ४ ॥ अहो महांति पुण्यानि यत्प्राप्तोऽद्येष संयमी । प्रतिलाभ्य तदेनं स्वं करोमि सफलं जनुः ॥ ५ ॥ ध्यात्वेति पुरतो भूत्वा महाभक्त्या जगाद सः । गृहाणेदं पयः साधो प्रसीद त्वं ममोपरि ॥ ६ ॥ द्रव्यं क्षेत्रं च कालं च भावं ज्ञात्वा च साधुना । यथेच्छमाददे दुग्धं मदनेनार्जितं शुभं ॥ ७ ॥ मदनोऽपि तमानम्य मुनिं प्राप्तो जलाशयं । कृतार्थं मन्यमानः स्वं दत्तशेषं पयः पपौ ॥ ८ ॥ उपविश्य ततो यावत्सरसो दुस्तटे जलं । पातुं लग्नो द्रुतं तावद्गतोऽतः स्खलितक्रमः ॥ ९ ॥ अगाधसलिले मग्नो मृत्वात्र मदनः पुरे । सुतो विजयभूपस्य जज्ञे दानप्रभावतः ॥ १० ॥ दत्तं कंदर्प इत्यस्य नामधेयं क्रमेण सः । पितर्युपरते पृथ्वीनाथोऽत्र नगरेऽभवत् ॥ ११ ॥ प्रियमित्रोऽथ सुंदर्या सहितो ह्यलसत्पुरे । ताभ्यां च रुद्राभद्राभ्यां चक्रे वैरमनेकधा ॥ १२ ॥ अन्यदा प्रियमित्रोऽथ यक्षंप्रति धनंजयं । चचाल सपरीवारः सुंदर्या प्रियया समं ॥ १३ ॥ प्राप्तो यावद्व्रजन् मार्गे न्यग्रोधालंकृतां भुवं । अभ्यायांतं मुनिं तावद्दर्शंक स सप्रियः ॥ १४ ॥ अशुभं शकुनं मुंडः संमुखोऽयं यदागतः । भविष्यत्यफला यात्रा किंचिच्चान्यदमंगलं ॥ १५ ॥ जल्पंतीति प्रिया तस्य सुंदरी वाहनं निजं । परिवारं च संस्थाप्योपसर्गानकरोन्मुनेः

॥१६॥ उपसर्गो ममैषोऽत्र सांप्रतं समुपस्थितः । विचिंत्येति झटित्येष कायोत्सर्गे स्थितो मुनिः ॥१७॥ कृत्वा-हंकारमस्माभिः सममेष स्थितो मुनिः । भणंती निष्ठुरं सेति प्राकुप्यत्प्रियसुंदरी ॥ १८ ॥ अमुष्मादिष्टि-कापाकाज्ज्वलतोऽग्निमिहानय । येनैष डंभ्यतेऽस्माकमपैत्यशकुनं पुनः ॥ १९ ॥ पाखंडिनोऽस्य निःशेषा स्फेव्यतेऽहंकृतिर्यथा । इत्यादिष्टो निजो भृत्यः सुंदरोऽभिधया तया ॥ २० ॥ युग्मं ॥ तेनोचे पादयोर्न स्तः पादुके मम संप्रति । ततः कंटकमध्येन को यास्यति निरर्थकं ॥ २१ ॥ मुंचतैनमभिप्रायं यूयं प्रच-लताग्रतः । श्रुत्वेति जल्पितुं लग्नः प्रियमित्रः क्रुधा ज्वलन् ॥ २२ ॥

अहो एतस्य वध्नीत सुंदरस्य क्रमौ वटे । भूमौ न लगतो येन भज्यंते नैव कंटकाः ॥२३॥ सुंद-र्यपि समुत्तीर्य शकटात्कुपिता भृशं । वियोग आवयोर्माभूदनेनाशकुनेन ते ॥ २४ ॥ विप्रयोगस्तवैवास्तु सदा स्वैर्बंधुभिः सह । पाखंडि राक्षस त्वं रे सर्वजीवभयंकरः ॥ २५ ॥ नानेत्याक्रोशवाक्यानि जल्पंती सातिनिष्ठुरं । लेष्टुभिस्ताडयामास त्रिः स्वं शर्मेव तं मुनिं ॥ २६ ॥ मुनिहस्तादृग्रहीत्वा च रजोहरणम-क्षिपत् । निजे याने बभाषे चाऽशकुनं प्रत्यहन्यत ॥ २७ ॥ ततश्चलत निर्भीकाः पूजयामो धनंजयं । इत्युक्ते सपरीवारौ तौ गतौ यक्षमंदिरं ॥ २८ ॥ पूजयित्वा च तं यक्षं यदोपावीक्षतां तकौ । दास्यैकया

तदावादि जिनधर्मानुरक्तया ॥ २९ ॥ युवाभ्यामर्जितं भूरि पापमद्य महामती । तादृक् क्षमाधरः साधुर्यद्देष उपसर्गितः ॥ ३० ॥ ईदृशैः साधुभिः सार्द्धमपि हास्यं करोति यः । अत्रामुत्र च दुःखानि-लभते विविधानि सः ॥ ३१ ॥

तथा तथा तदा दास्या दंपती तौ प्रबोधितौ । यथा दुर्गतिदुःखानां भीत्या लग्नौ प्रकंपितुं ॥ ३२ ॥ पश्चात्तापं ततोऽत्यर्थं कुर्वाणौ दीनमानसौ । निंदंतौ मुहुरात्मानं जिनधर्माभिलाषकौ ॥ ३३ ॥ प्रशंसंतौ भृशं दासीं वलित्वा यक्षमंदिरात् । तौ तस्यैव मुनेः पार्श्वमायातां दंपती पुनः ॥ ३४ ॥ युग्मं ॥ तदाहं पारयिष्यामि लप्स्ये धर्मध्वजं यदा । इति निश्चित्य तत्रैव तथैवास्थान्मुनिस्तु सः ॥ ३५ ॥ वंदित्वाथ मुनिं धर्मध्वजं हस्ते समर्प्य च । तौ व्यजिज्ञपतामेवं रुदंतावुभयावपि ॥ ३६ ॥ अज्ञानपरतंत्राभ्यामावाभ्यां भवतः प्रभो । जगत्पूज्यस्य या कापि गुर्वी चक्रे विराधना ॥ ३७ ॥ अनंतभवचक्रेऽस्मिन्नावां या भ्रामयिष्यति । श्वभ्रादिदुःखसंपूर्णे मृत्स्नापिंडं कुलालवत् ॥ ३८ ॥ तदागस्त्वावयोः सर्वं त्वया साधो क्षमावता । कारुण्यायत्तचित्तेन क्षंतव्यमविनीतयोः ॥ ३९ ॥ उपायांतरमाख्याहि तं कंचन मुनेऽधुना । आवां येन विनिर्मुक्तौ भवावः पातकादतः ॥ ४० ॥ पारयित्वाथ साधुः स कायोत्सर्गमभाषत । कुप्येम चेद्वयं

तन्न जीवेत्कोऽपीह भूतले ॥ ४१ ॥ युवाभ्यां तु विवेकिभ्यां भाव्यं त्याज्या च मूढता । जिनधर्मो ग्रहीतव्यः सर्वपापक्षयंकरः ॥ ४२ ॥ मुनिपार्श्वे ततस्ताभ्यां श्रद्धालुभ्यामुपाददे । श्राद्धधर्मो व्रतै रम्यः सम्यक्सम्यक्त्वसंयुतः ॥ ४३ ॥ अनगारं तमामंत्र्य भक्तपानादिभिस्ततः । दंपती तौ निजं गेहं गतौ संवेगरंगितौ ॥ ४४ ॥ महात्मा सोऽपि भिक्षार्थं नगराभ्यंतरे ययौ । तयोः पुण्यवशाद्गेहं संप्राप्य परिभ्रमन् ॥ ४५ ॥ कृतार्थं मन्यमानाभ्यां स्वं ताभ्यां परया मुदा । विशुद्धैर्भक्तपानाद्यैः स साधुः प्रतिलाभितः ॥ ४६ ॥ पालयंतौ ततः सम्यक् श्राद्धधर्ममुभावपि । अकृत्रिमां मिथः प्रीतिं दधतौ तौ स्थितौ सुखं ॥ ॥४७॥ अथान्यदाऽलगद्रुद्राभद्राभ्यां कलहो महान्। तयोर्द्वयोर्निमित्तेन केनापि स्नेहयुक्तयोः ॥४८॥ धिगावयोरिदं जन्म जीवितं च निरर्थकं । यदेवं कलहो नैव निवर्त्तते कदाचन ॥ ४९ ॥ तदावाभ्यां यथाशक्ति धर्मो दानादिकः कृतः । त्यज्यते जीवितं चैतदिदानीं कलहेन किं ॥५०॥ एकांते मंत्रयित्वैवमेकचित्ते उभे अपि । अनाख्याय च कस्यापि कूपे ते पेततुर्द्रुतं ॥ ५१ ॥ त्रिभिर्विशेषकं ॥ मृत्वा रुद्राथ संजज्ञे । पुत्री जयपुरेशितुः । चंद्रपालस्य कनकवती नाम्ना महीभुजः ॥ ५२ ॥ परिणीतामुना राज्ञा श्रीवीरधवलेन सा । भद्रापि व्यंतरी जाता परिणामवशेन सा ॥ ५३ ॥ भ्रमंती सान्यदा पृथ्वीस्थानद्रंगे समागता । प्रियादि-

मित्रसुंदर्योर्दर्शने वैरमस्मरत् ॥ ५४ ॥

ततो रोषेण सा रात्रावुभयोरपि सुतयोः । पातयित्वा महाभित्तिं तयोरुपरि जग्मुषी ॥ ५५ ॥ मृतौ तौ दंपती शुद्धभावेनाथ तयोर्द्वयोः । प्रियमित्रो बभूवायं तत्र पुत्रो महाबलः ॥ ५६ ॥ प्रियसुंदर्यथो जज्ञे सैषा मलयसुंदरी । वधूस्तत्र महाराज श्रीवीरधवलात्मजा ॥ ५७ ॥ ततो मयसुंदर्या स्वत्पुत्रेण च यत्पुरा। तीव्रं ताभ्यां समं रुद्राभद्राभ्यां वैरमर्जितं ॥ ५८ ॥ स्मरंती तन्महावैरं ज्ञात्वा सावधिना सुरी । महाबलकुमारेंद्रं पुनर्हंतुं प्रचक्रमे ॥ ५९ ॥ किंतु पुण्यप्रभावेण कुमारस्य न किंचन । कर्तुं शशाक देहस्य जलस्य ज्वलनी यथा ॥ ६० ॥ ततो रोषेण सा रात्रौ प्रसुप्तस्यास्य निर्भरं। वासवेश्म समागत्य चकारोपद्रवं सदा ॥ ६१ ॥ तया हृत्वा कुमारस्य वस्त्रालंकरणान्यपि । तत्र मुक्तानि यत्राप कुमारो वटकोटरे ॥६२॥ कन्या मलयसुंदर्या योऽर्पितः पूर्वसंगमे । लक्ष्मीपुंजः कुमाराय हारो निजहृदा समं ॥ ६३ ॥ सोऽपि हारः कुमारस्य शयितस्य तथा निशि । अपजह्रे स्ववैरेण व्यंतर्या वासवेश्मतः ॥ ६४ ॥ पाश्चात्यजन्मनः स्वस्रा दधत्या स्नेहमेतया । कंठे कनकवत्याः स ततो नीत्वा निवेशितः ॥ ६५ ॥ अत्रांतरेऽवदद्वीरधवलो विस्मिताशयः । भगवन् किमिदं सम्यग् वदास्माकमसंभवि ॥६६॥ येनैष मिलितो नैव कदाप्यस्या महाबलः ।

स्वयंवराभिधं मुक्त्वा तदेकं वरमंडपं ॥ ६७ ॥ ततः कुमारसुंदर्योर्दंपत्योः स्मयमानयोः । सर्वमप्यवदत्सूरि-र्ज्ञानदृष्टत्रिविष्टपः ॥ ६८ ॥

कुमारो मिलितः पूर्वं यथा तत्रागतश्च सः । लक्ष्मीपुंजो यथा हारः कुमार्यास्मै समर्पितः ॥ ६९ ॥ तया कनकवत्याथ यथा प्राग्भववैरतः । कूटाख्यानैः पिता पुत्र्या उपरिष्टात्प्रकोपितः ॥ ७० ॥ इत्याद्य-शेषं कनकवत्याः प्रोक्तं कथानकं । ततः सर्वेऽवदन्नेवं धिग् धिग् च नीचयोपितां ॥ ७१ ॥ कुमारोऽपि निजावासात्तयैवायं हृतस्तदा । तेनाहता तथाऽनेशत्पुनः सा नागमद्यथा ॥ ७२ ॥ मृत्वा कर्मकरः सोऽथ सुंदरो वटपादपे । भूतो बभूव तत्रैव पृथ्वीस्थानपुराद्बहिः ॥ ७३ ॥ ततो यदा भ्रमंस्तत्र संप्राप्तोऽसौ म-हाबलः । ज्ञानेनावगतस्तेन तदा भूतसुपर्वणा ॥ ७४ ॥ बध्नीतास्य वटे पादौ भूमौ न लगतो यथा । इति तत्प्रियमित्रस्य स्मृतं तेन वचस्तदा ॥ ७५ ॥

तदेतस्याप्यहं कांचित्पीडां कुर्वे तथाविधां । ध्यायन्निति शवस्यास्ये स्थित्वा भूतो जजल्प सः ॥ ॥ ७६ ॥ हंहो मूढ किमेवं मामत्रोद्बद्धं हसस्यलं । उद्बध्यसे त्वमप्यत्र निश्येष्यंत्यां वटद्रुमे ॥ ७७ ॥ अधोमुखश्चोर्ध्वपादो बहुदुःखं सहिष्यसे । इति तत्कर्मवशतस्तत्रोद्बद्धो महाबलः ॥ ७८ ॥ अन्यदा

रुद्रया पत्युर्मुद्रारत्नं वरं हृतं । लोभाभिभूतया चौर्यचित्तया पूर्वजन्मनि ॥ ७९ ॥ दृष्टा सुंदरदासेन स्थितेन क्वापि गृह्णती । सा मुद्रां प्रियमित्रेऽथ तां पश्यति जगाद सः ॥ ८० ॥ रुद्रापार्श्वेऽस्ति सा मुद्रा यूयमेवं किमाकुलाः । ततो रुद्रावदद्रोपात्सुंदरस्यास्य सन्मुखं ॥ ८१ ॥ रे कूट छिन्न गंधज्ञ मद्वैरिन्नात्थ किं मृषा । अंगुलीयं मया क्वात्त ततो मौनेन स स्थितः ॥ ८२ ॥ प्रियमित्रेण तत्पार्श्वात् सामदंडभिदादिभिः । मुद्रारत्नं तदादायि रुद्राया लाघवं कृतं ॥ ८३ ॥ वदंत्या दुर्वचः कर्म रुद्रया यत्तदार्जितं । छिन्ना कनकवत्यास्तु नासिका तेन कर्मणा ॥ ८४ ॥ भूतोभूतेन तेनैव सुंदरेण विधेर्वशात् । ज्ञात्वा ज्ञानाद्भवं पूर्वं स्थित्वा च स्तेनविग्रहे ॥ ८५ ॥ युग्मं ॥ रागोऽभूत्प्रियसुंदर्यां प्राग्भवे मदनस्य यत् । लुब्धो मलयसुंदर्यां कंदर्पस्तेन हेतुना ॥ ८६ ॥ पूर्वं मलयसुंदर्या कुमारेणामुनापि यत् । सुसाधुभ्यो ददे दानं जिनधर्मोऽपि पालितः ॥ ८७ ॥ तेनाभ्यां सर्वसामग्री लब्धोत्तमकुलादिका । तथा मलयसुंदर्या यदाक्रुष्टो यतीति सः ॥ ८८ ॥ विप्रयोगस्तवैवास्तु सदा सार्द्धं स्वबंधुभिः । त्वं राक्षस इवात्यंतं भयकारीति भाषितः ॥ ८९ ॥ वारान् लेष्टुप्रहारैस्त्रीन् यद्रोपेण हतो मुनिः । महाबलोऽपि मौनेन यत्तस्थावनुमोदयन् ॥ ९० ॥ द्वाभ्यामाभ्यां ततः पूर्वं दृढं पातकमार्जितं । पश्चात्तापं वितन्वद्भ्यां पश्चात्क्षिप्तं पुनर्बहु ॥ ९१ ॥ किंच नोदृग-

रितं यच्च प्राप्तस्तस्यानुभावतः । वियोगो निजलोकेभ्यो द्वाभ्यामाभ्यां चिरूचकैः ॥ ९२ ॥

पार्श्वात्कनकवत्याश्च वैरिण्याः पूर्वजन्मनः । राक्षसीत्वकलंकोऽस्या निर्दोषाया अजायत ॥ ९३ ॥ आभ्यां सेहे महादुःखं स्वस्वकर्मानुमानतः । यतोऽनुभूतमेवात्र बलवत्कर्म निर्जरेत् ॥ ९४ ॥ पुरा मलयसुंदर्या यद्रजोहरणं हृतं । मुनिहस्ताद्मुनेन वियोगः सह सूनुना ॥ ९५ ॥ उपसर्गान् पुरा कृत्वामूभ्यामाराधितो मुनिः । उत्पन्नकेवलज्ञानो महाराजाहमेव सः ॥ ९६ ॥ अस्या मलयसुंदर्याः कुमारस्य च संप्रति । द्वितीयं जन्म राजेंद्र भवस्त्वेकः स एव मे ॥ ९७ ॥ राजोचे भगवंस्ते द्वे सुरी कनकवत्यपि । एतयोर्वैरसयोः किंचिदतोऽप्यपकरिष्यतः ॥ ९८ ॥ सूरिरुचे यदा राजन् कुमारेणाहता सुरी । गतोपशांतवैरा सा तदैव निजमास्पदं ॥ ९९ ॥ भ्रमंती कनकवती सात्रैव नगरे पुनः । उपद्रोष्यत्यमुं राजन्नेकशस्तव नंदनं ॥ ७०० ॥ ततः कनकवत्येषा व्यंतरी साप्युभे इमे । संसारमर्जितेनस्के अनंतं पर्यटिष्यतः ॥ १ ॥ राजन् मलयसुंदर्या महाबलनृपस्य च । यस्त्वयाथ भवः पृष्टः स मया कथितोऽखिलः ॥ २ ॥ एवं मलयसुंदर्या महाबलनृपस्य च । निशम्य चरितं सर्वे बभूवुर्भवनिःस्पृहाः ॥ ३ ॥ दंपतीभ्यां तदा ताभ्यामाकर्ण्य चरितं निजं । वैराग्येण गृहीतानि व्रतानि गृहमेधिनां ॥४॥ मुनीनां भक्तिरावाभ्यां सदा कार्या विशेषतः । इति

चाभिमहोऽग्राहि पार्श्वे केवलिनो गुरो. ॥ ५ ॥ अन्ये केऽपि तदा भव्या वभूवुः संयमोद्यताः । श्राद्धधर्मोद्यताः केऽपि शेषा भद्रकचेतसः ॥ ६ ॥ निजापत्यचरित्रं तौ श्रुत्वा द्वावपि भूपती । जातौ संसारभीतांतःकरणौ चरणोद्यतौ ॥ ७ ॥ ऊचतुश्च प्रभो कृत्वा स्वस्वराज्यस्य चिंतनं । दीक्षामावां गृहीष्यावः सत्वरं भवदंतिके ॥ ८ ॥ मा कार्ष्ट प्रतिबंधं भो इत्युक्ते गुरुणाथ तौ । नत्वाऽगातां पुरं स्वं स्वं राज्यचिंतां च चक्रतुः ॥ ९ ॥ महाबलकुमाराय सूरपालेन भूभुजा । पृथ्वीस्थानपुरैश्वर्यं दत्तं तत्रैव तस्थुषा ॥ १० ॥ महाबलसुतस्तस्मिन् राजा शतबलाभिधः । बालोऽपि स्थापितो द्रंगे सागरतिलकाभिधे ॥ ११ ॥ श्रीवीरधवलेनापि राज्ञा तत्रैव तस्थुषा । सुतो मलयकेतुश्च निजराज्ये नृपः कृतः ॥ १२ ॥ ततो द्वावपि राजानौ स्वस्वभार्यासमन्वितौ । तस्य केवलिनः पार्श्वे तौ गृह्णीतःस्म संयमं ॥ १३ ॥ कतिचिद्दिवसांस्तत्र स्थित्वान्यत्र महीतले । विजहार गुरुस्ताभ्यां राजर्षिभ्यां समन्वितः ॥ १४ ॥ तप्त्वा सर्वेऽपि ते तीव्रं तपो गत्वा सुरालयं । महाविदेहक्षेत्रे च सिद्धिं यास्यंत्यकर्मकाः ॥ १५ ॥ अथो मलयकेतुराट् समापृच्छ्य महाबलं । स्वसारं सुंदरीं चापि जगाम निजपत्तनं ॥ १६ ॥ पुरे सागरतिलके मुक्त्वा सेनापतिं निजं । सार्द्धं शतबलेनागात्स्वं पुरं च महाबलः ॥ १७ ॥ राज्यं च पालयामास जितदुर्जयशात्रवः । सत्कुटुंबः सिषेवे च

जिनधर्ममहर्निशं ॥ १८ ॥ तस्य व्यंतरदेवस्य साहाय्याद्विषयान् बहून् । वशीचकार चक्रे च जिनधर्मसमुन्नतिं ॥ १९ ॥ प्रासादान् कारयामास जिनानां च पुरे पुरे । स्मरन् पूर्वभवं चक्रे साधुभक्तिं च सर्वदा ॥ २० ॥ द्वितीयोऽथ तयोः पुत्रः सहस्रबलसंज्ञितः । कालक्रमेण संजज्ञे निजवंशधुरंधरः ॥ २१ ॥ कृत्वा बहूनि वर्षाणि राज्यं वयसि पश्चिमे । स राज्ये स्थापयामास सहस्रबलमंगजं ॥ २२ ॥ ततः सागरतिलके वेलाकूले रमाकुले । राज्यं पालयति ज्येष्ठे पुत्रे शतबलाभिधे ॥ २३ ॥ पृथ्वीस्थाने क्रमायातं राज्यं शासति सुंदरं । गुणज्येष्ठे कनिष्ठे च सहस्रबलनामनि ॥ २४ ॥ पादमूले गुरोर्भार्यायुक्तो राजा महाबलः । महोत्सवेन जग्राह विधिना संयमश्रियं ॥ २५ ॥ त्रिभिर्विशेषकं ॥ द्वावपि द्विविधां शिक्षां शीलयंतौ विजह्रतुः । सार्द्धं गुरुजनैर्नित्यं तप्यमानौ तपश्च तौ ॥ २६ ॥ गत्वा गत्वा च तौ धर्मे प्रेरयामासतुः सुतौ । वारयामासतुर्नित्यं व्यसनासेवनात्पुनः ॥२७॥ मन्यमानौ कृतार्थं स्वं गुरुशिक्षाभिरन्वहं । तावुभौ बांधवौ जातौ दृढस्नेहौ परस्परं ॥ २८ ॥ तथा च तावजायेतां जिनधर्मैकतत्परौ । येऽन्येषां मार्गदेष्टारौ मार्गाद्भ्रंशंति ते हि किं ॥ २९ ॥ महाबलोऽथ राजर्षिः खड्गधाराव्रतं चरन् । ज्ञातागमः क्रमेणाभूद्गीतार्थकशिरोमणिः ॥ ३० ॥ एकाकित्वविहारेणानुज्ञातो गुरुभिस्ततः । विजहार महात्मासौ सर्वत्रास्खलितव्रतः

॥ ३१ ॥ मेरुवन्निश्चलः सर्वंसहः सर्वसहेव यः । सौम्यः सोम इवात्यंतं सदाचारी समीरवत् ॥३२॥ आकाशवन्निरालंबः शंखवच्च निरंजनः । संवेगरसनिर्मग्नो मग्नाभ्यंतरशात्रवः ॥३३॥ पुरे सागरतिलके स तत्र विहरन् ययौ । वाचंयमो क्रमाद्यत्र पुत्रः शतबलोऽस्य राट् ॥३४॥ त्रिभिर्विशेषकं ॥ उपलक्ष्याथ तं साधुं गत्वा चोद्यानपालकः । व्यजिज्ञपत्सभासीनं नृपं शतबलं मुदा ॥ ३५ ॥ महाबलमुनिर्देव पुरोद्याने पिता तव । एकाकित्वविहारेण भ्रमन्नत्रागतोऽधुना ॥ ३६ ॥ राजा शतबलेनाथ हर्षरोमांचशालिना । प्रीतिदानं ददे तस्मै वनपालाय वांछितं ॥३७॥ संध्यायाः समयो जातः सांप्रतं तद्दिवामुखे । अभिगम्य प्रणंस्यामः सर्वर्द्ध्या जनकं निजं ॥ ३८ ॥ धन्योऽयं सकलो लोकः पवित्रितमिदं पुरं । पुण्यैरस्माकमाकृष्टो यत्तातोऽद्य समागमत् ॥३९॥ इति जल्पन्नृपो मुक्त्वा सामग्रीं पादुकादिकां । स्थितस्तत्रैव पितरं ववंदे भूरिभक्तितः ॥ ४० ॥ द्रष्टुमुत्कंठितस्तातपादपद्मयुगं नृपः । कृच्छ्रेण गमयामास निशां तां सपरिच्छदः ॥ ४१ ॥ इतः सा कनकवती पर्यटंती पुरे पुरे । तत्रैव नगरे तस्मिन् समये दुःखितागता ॥ ४२ ॥ तथा केनापि कार्येण गतया तत्र कानने । कायोत्सर्गस्थितो दृष्टः स संध्यासमये मुनिः ॥ ४३ ॥ उपलक्ष्याथ तं सम्यक् चिंतयामास सा भयात् । महाबलः स एवैष सूरपालसुतो व्रती ॥४४॥ कुत्सितानि समस्तानि मूलाजानात्ययं

मम। आविष्कर्त्तात्र चेत्तानि तद्भविष्याम्यहं कथं ॥ ४५ ॥ तत्करोमि तथा किंचिन्न यथा वेत्ति कश्चन । अन्यथात्र न मे वासः कथंचिन्न च जीवितं ॥ ४६ ॥ एवं सा कनकवती सूत्रयित्वा गता ततः । प्रतीक्षमाणा समयं तस्यो दुष्टा निजे गृहे ॥ ४७ ॥ स्फुरितेऽथ निशाध्वांते मार्गेषु विजनेषु च । केनाप्यलक्षिता पापा चलिता सा निजाश्रयात् ॥ ४८ ॥ गृहीत्वाग्निं ययौ तत्र सा यत्रास्ति स संयमी । कायोत्सर्गेस्थितो मूर्त्त इव धर्मः स्थिराशयः ॥ ४९ ॥ गोपुराणि प्रदत्तानि मुनिकष्टमवेक्षितुं । मिलितानीव नेत्राणि नगरेणाऽसहिष्णुना ॥ ५० ॥ प्रशांतलोकसंचारं भूमिभागं विलोक्य तं । शून्यारण्यवत्कनकवती हृष्टा भृशं हृदि ॥ ५१ ॥ तत्र चानीय केनापि काष्ठान्यंगारहेतवे । पूर्वमेव प्रभूतानि मुक्तान्यासन् स्वभावतः ॥ ५२ ॥ तया तैः पापया काष्ठैर्वेष्टयंत्या तदा मुनिं । छादितः स तथा क्वापि यथा न ददृशे मनाक् ॥ ॥ ५३ ॥ चातुर्गतिकसंसारदुःखैर्नानाविधैः किल । तयात्मा वेष्टितः काष्ठैर्वेष्टयंत्या तदा मुनिं ॥ ५४ ॥ जन्मांतरस्य वैरिण्या ततो निर्दयया तया । चतसृष्वपि काष्ठासु ज्वलनो ज्वलितो भृशं ॥ ५५ ॥ मुनिनापि तदा ज्ञात्वोपसर्गं मरणांतिकं । विहिताराधना चित्ते तथैव स्थितिमीयुषा ॥ ५६ ॥ ततः प्रज्ज्वलितो वह्निर्मुनिं दग्धुं समंततः । प्रारेभे मूलतस्तस्याः सुकृतस्येव संचयं ॥ ५७ ॥

महावलमुनिः सम्यगुपसर्गं सुदुस्सहं । सहमानः स्वमात्मानं लग्नो वोधयितुं ततः ॥ ५८ ॥ रे जीव भवता प्राप्तप्रायं तीरं भवांवुधेः । शुभभावमहापोतचटितेन चिरादिह ॥ ५९ ॥ ततः सद्भावनापोतमेतं सच्चित्तवायुना । तथा प्रेरय रे जीव यथाशु लभते तटं ॥ ६० ॥ दुःखानि यानि सोढानि भवता नरकादिषु । तानि चिंतयतो दुःखं तवेदं जीव कीदृशं ॥ ६१ ॥ मा चिंतयाऽशुभं किंचित्त्वमस्या उपरि स्त्रियाः । येनैषा ते सखा कर्मवनोन्मूलनकर्मणि ॥ ६२ ॥ वाह्यांगं ज्वलयन् धर्मदेहमाभ्यंतरं न च । ज्वलनोऽप्यहितं किंचित्करोत्येष न तेऽधुना ॥ ६३ ॥ इत्थं तदा भृशं तस्य प्रवृत्ता शुभभावना । उत्पन्नं केवलज्ञानं घातिकर्मक्षयायथा ॥ ६४ ॥ शुक्लध्यानानले मध्ये वहिश्च ज्वलितेऽनले । भावोपग्राहिकर्माणि भस्मीकृत्य क्षणादपि ॥ ६५ ॥ अंतकृत्केवली भूत्वा स साधुः प्राप निर्वृतिं । जन्ममृत्युजरादीनां ददौ चाशु जलांजलिं ॥ ६६ ॥ युग्मं ॥ ज्वलने ज्वलितप्राये कांदिशीका गता क्वचित् । पापिष्ठा कनकवती सा भ्रष्टा शुभकर्मतः ॥ ६७ ॥ संजातेऽथ प्रभाते स यावच्छतवलो नृपः । तत्रागात्सपरीवारः स्वपितुर्दर्शनोत्सुकः ॥ ६८ ॥ भस्मराशिस्थितं तावद् दृष्ट्वा दग्धं मुनेर्वपुः । परिवारयुतो राजा वक्तुं लग्नो प्रसत्कृतः ॥ ६९ ॥ निर्भयेन भवभ्रांतेर्निर्निमित्तारिणा निशि । नूनमेष महासाधुराः केनाप्युपसर्गितः ॥

॥ ७० ॥ निष्पुण्येन मया तात भवतां पादपंकजं । लब्धापि दुर्लभं नैव मत्समागत्य हा द्रुतं ॥ ७१ ॥ ॥ युष्माकं पतिता दृष्टिः प्रसन्ना न ममोपरि । मया कर्णपुटाभ्यां च न पीतं वचनामृतं ॥ ७२ ॥ मनोरथा विलीना मे रोरस्येवाधुना हृदि । अद्यैवाहं निराधारोऽभूवं चाऽनायकः पितः ॥ ७३ ॥ द्रष्टुं शक्या न युष्माकं जातावस्था यदीदृशी । नूनं न संति पुण्यानि यन्नाभूत्संगमोऽपि मे ॥ ७४ ॥ विलपन्निति भूपालः शोकवाष्पाकुलेक्षणः । भ्रूविक्षेपेण सहसेत्यादिदेश निजान् भटान् ॥ ७५ ॥ पदानुसारतः पापं तं पश्यत द्रुतं भटाः । लप्स्यध्वे निश्चितं यूयं पापं तस्य फलिष्यति ॥ ७६ ॥ ततो विलोकयद्भिस्तैस्तदा पादानुसारतः । लब्धा सा कनकवती दुराचारस्थिता क्वचित् ॥ ७७ ॥ केशग्राहं समानीय ततो राज्ञः समर्पिता । तेन ताडयिता पृष्टा छिन्ननासाथ सा वशा ॥ ७८ ॥ हन्यमानाथ सा सर्वं सम्यगूचे नृपाग्रतः । तेन नानाविधैर्मारैः सा पापा मारिता ततः ॥ ७९ ॥ तया प्राप्तमशेषं च निजकर्मोचितं फलं । नरकोर्व्यां समुत्पन्ना सा षष्ठ्यां कष्टभाजनं ॥ ८० ॥ नातशोकं नरेंद्रोऽपि कुर्वाणो मंत्रिभिर्भृशं । संबोधितोऽपि नात्याक्षीत् क्षणमात्रमपि क्वचित् ॥ ८१ ॥ ज्ञात्वा तातस्य तादृक्षं दुस्सहं मरणं ततः । सहस्रबलभूपोऽपि न्यमजच्छोकसागरे ॥ ८२ ॥ द्वयोरपि तयो राज्ञोः पितृशोकभरो भृशं । रामलक्ष्मणव-

कृष्णबलदेववदस्फुरत् ॥ ८३ ॥ इतश्चामलचारित्रा साध्वी मलयसुंदरी । एकादशांगतत्त्वज्ञा प्रतिबोधपरायणा ॥ ८४॥ तप्यमाना तपस्तीव्रं कर्ममर्मच्छिदोद्यता । क्रमोत्पन्नावधिज्ञाना गुरुभिः श्रीमहत्तरा ॥८५॥ स्वसंदेहतमांसीह जघानार्कप्रभेव सा । वित्रस्तकुनयोलूका भव्यांभोजप्रबोधिका ॥ ८६ ॥

महाबलमुनेर्ज्ञात्वा निर्वाणं तनयं निजं । प्रबोधयितुमायाता पुरे तत्र महत्तरा ॥ ८७ ॥ वसताबुचितायां सा स्थिता साध्वीसमन्विता । राज्ञा शतबलेनैत्य महाभक्त्या च वंदिता ॥ ८८ ॥ आलापितो महाराजः प्रसन्नाननया तया । गिरा मधुरया श्रोतृश्रवणामृतकुल्यया ॥ ८९ ॥ पिता तव नराधीश महासत्त्वशिरोमणिः । उपसर्गात्त्रियास्तस्याः प्रपेदे शिवसंपदं ॥ ९० ॥ सर्वपुत्रकलत्रादि त्यज्यते यस्य हेतवे । सह्यते च महादुःखं तपोलोचक्रियादिकं ॥ ९१ ॥ दुर्लभं यदि तत्प्राप्तं स्थानं शाश्वतमुत्तमं । त्यक्तो भवश्च पित्रा ते शोकोऽयापि ततः कथं ॥ ९२ ॥ महानिधानमाप्नोति यद्यभीष्टो जनो निजः । विजृंभते महाशोको वद किंवा महोत्सवः ॥ ९३ ॥ सुदुस्सहाग्निपीडापि न चिंत्या च पितुस्त्वया । प्रहाराञ्च सहंते किं जयश्रीलंपटा भटाः ॥ ९४ ॥ साधयंतोऽथवा विद्यां नरा दुःखं सहंति वै । सिद्धिरत्यद्भुता येन किंवा कथं न जायते ॥ ९५ ॥ तातपादा नता मैव कर्तव्येति च नाऽधृतिः ।

नापि च ॥ ९६ ॥ तद्विमुंच पितुः शोकं परिभावय संस्रतिं । परित्राणं न शोकेन किंचिद्भवति देहिनां ॥ ॥ ९७ ॥ भवं दुःखालयं विद्धि संगमं स्वप्नसन्निभं । लक्ष्मीं विद्युल्लतालोलां जीवितं बुद्बुदोपमं ॥ ९८ ॥ यदि युष्मादृशोऽप्येवं गुरुशिक्षाविचक्षणाः । शोकं कुर्वंति तर्ह्ययं विवेकोऽपि क्व यास्यति ॥ ९९ ॥ एवं धर्मोपदेशैः स नरेंद्रो बोधितस्तया । संविग्नो गतशोकश्च लग्नो धर्मे विशेषतः ॥ १ ॥ नित्यं महत्तरापादान् वंदतेस्म नरेश्वरः । उपदेशान् शृणोतिस्म शासनोद्यकारिणः ॥ २ ॥ चैत्यं च कारयामास सिद्धिस्थाने मुनीशितुः । प्रतिमां च पितुस्तत्र विविधानुत्सवानपि ॥ ३ ॥ जनानां तत्र सर्वेषां उपकारं विधाय सा । आपृच्छ्य नृपतिं तस्माद्विजहार महत्तरा ॥ ४ ॥ पृथ्वीस्थानपुरं सापत् प्रतिबोधयितुं क्रमात् । पितृशोकाकुलं भूपं सहस्रबलसंज्ञितं ॥ ५ ॥ धर्मोपदेशदानेन सहस्रबलभूपतिः । संबोध्य सपरीवारस्तया धर्मे स्थिरीकृतः ॥ ६ ॥ कतिचिद्दिनपर्यंते नंतुमुत्को महत्तरां । राजा शतबलोऽप्यागाद्भ्रातृस्नेहेन तत्र सः ॥७॥ महत्तरां ववंदाते शृणुतःस्म च देशनां । तौ द्वावप्यासिपेवाते धर्ममेकाग्रमानसौ ॥ ८ ॥ आनर्चतुस्त्रिकालं तौ जिनं सम्यक्त्वशालिनौ । पात्रेभ्यो ददतुर्दानं तपः शक्त्या च चक्रतुः ॥ ९ ॥ विधिना संघपूजां तौ दानशालाश्च चक्रतुः । वारयामासतुर्लोकमधर्मान्मारितोऽपि च ॥ १० ॥ प्रतिग्रामं प्रतिद्रंगं जिनेंद्रभ-

र्वनैस्तथा । भूपयामासतुर्भूमिं सकलामचलापती ॥ ११ ॥

जिनचैत्येषु सर्वेषु स्नात्रपूजोत्सवादिभिः । अष्टाहिकाः सदा तीर्थरथयात्राश्च चक्रतुः ॥ १२ ॥ दृढस्नेहो सदा जैनधर्मभारधुरंधरौ । बांधवौ तस्थतुस्तौ द्वौ कुर्वाणौ शासनोन्नतिं ॥ १३ ॥ सिषेवे सर्वलोकोऽपि जिनधर्मं नृपानुगः । नास्फुरन्नपरे धर्मास्तारा इव खगोदये ॥ १४ ॥ कांश्चित्कांश्चिज्जनान् धर्मविशेषेऽथ कश्चित् कांचित् । स्थापयित्वा गतान्यत्रापृच्छ्य पुत्रौ महात्तरा ॥ १५ ॥ प्रभूतान्यथ वर्षाणि पालयित्वा यतिव्रतं । तुच्छयित्वा च कर्माणि तपोयोगसमाधिभिः ॥ १६ ॥ कृत्वा चाराधनां प्रांते श्रीमन्मलयसुंदरी । जगाम द्वादशे कल्पे साऽच्युताख्ये महत्तरा ॥ १७ ॥ युग्मं ॥ ततश्च्युता विदेहे सा समुत्पद्योत्तमे कुले । क्रमेण चरणं लात्वा गमिष्यति शिवालयं ॥ १८ ॥ ततो मलयसुंदर्या एकश्लोकार्थचिंतनात् । बभूव गोष्पदस्थाननिभो व्यसनसागरः ॥ १९ ॥ तथान्येषामपि ज्ञानमाधारः संकटे भवेत् । ज्ञानाभ्यासः सदैवातः कर्त्तव्यः सुविवेकिभिः ॥ २० ॥ यथा मलयसुंदर्या पालितं शीलमुज्ज्वलं । संकटेऽपि तथान्याभिः पालनीयं प्रयत्नतः ॥ २१ ॥ उपसर्गेऽपि तादृक्षे महाबलमुनींदुना । यथा चक्रे क्षमाचर्या कर्त्तव्याप्यपरैस्तथा ॥ २२ ॥ यथा ताभ्यां व्रतं तीव्रं दंपतीभ्यां विनिर्मितं । अन्यैरपि तथा कार्यं सिद्धिसौ-

ख्याभिलापुकैः ॥ २३ आशातना यथा चाभ्यां विदधे पश्चिमे भवे । दुःखहेतुर्मुनींद्रस्य कर्त्तव्या न तथैव सा ॥ २४ ॥

श्रीमत्पार्श्वजिनेंद्रनिर्वृतिदिनायाते समानां शते ।
संजज्ञे नृपपनंदना मलयतः सुंदर्यसो नामतः ॥
एतस्याश्चरितं यथा गणभृता प्रोक्तं पुरा केशिना ।
श्रीमच्छंखनरेश्वरस्य पुरतोऽप्यूचे मयेदं तथा ॥ २५ ॥

इत्यागमिकश्रीजयतिलकसूरिविरचिते ज्ञानरत्नोपाख्याने मलयसुंदरीचरित्रे शीलावदातपूर्वभववर्णनो नाम चतुर्थः प्रस्तावः समाप्तः ॥ श्रीरस्तु ॥

॥ इति श्रीमलयसुंदरीचरित्रं समाप्तम् ॥

आ ग्रंथ श्रीजामनगरनिवासी लालन विठलजी हीरालाले स्वपरना श्रेयमाटे पोताना श्री सूर्योदय छापखानामां छापी प्रसिद्ध कर्यो छे ॥ श्रीरस्तु ॥

वनैस्तथा । भूपयामासतुर्भूमिं सकलामचलापती ॥ ११ ॥

जिनचैत्येषु सर्वेषु स्नात्रपूजोत्सवादिभिः । अष्टाहिकाः सदा तीर्थरथयात्राश्च चक्रतुः ॥ १२ ॥ दृढस्नेहौ सदा जैनधर्मभारधुरंधरौ । बांधवौ तस्थतुस्तौ द्वौ कुर्वाणौ शासनोन्नतिं ॥ १३ ॥ सिषेवे सर्वलोकोऽपि जिनधर्मं नृपानुगः । नास्फुरन्नपरे धर्मास्तारा इव खगोदये ॥ १४ ॥ कांश्चित्कांश्चिज्जनान् धर्मविशेषेऽथ क्वचित् क्वचित् । स्थापयित्वा गतान्यत्रापृच्छ्य पुत्रौ महात्तरा ॥ १५ ॥ प्रभूतान्यथ वर्षाणि पालयित्वा यतिव्रतं । तुच्छयित्वा च कर्माणि तपोयोगसमाधिभिः ॥ १६ ॥ कृत्वा चाराधनां प्रांते श्रीमन्मलयसुंदरी । जगाम द्वादशे कल्पे साऽच्युताख्ये महत्तरा ॥ १७ ॥ युग्मं ॥ ततश्च्युता विदेहे सा समुत्पद्योत्तमे कुले । क्रमेण चरणं लात्वा गमिष्यति शिवालयं ॥ १८ ॥ ततो मलयसुंदर्या एकश्लोकार्थचिंतनात् । बभूव गोष्पदस्थाननिभो व्यसनसागरः ॥ १९ ॥ तथान्येषामपि ज्ञानमाधारः संकटे भवेत् । ज्ञानाभ्यासः सदैवातः कर्त्तव्यः सुविवेकिभिः ॥ २० ॥ यथा मलयसुंदर्या पालितं शीलमुज्ज्वलं । संकटेऽपि तथान्याभिः पालनीयं प्रयत्नतः ॥ २१ ॥ उपसर्गेऽपि तादृक्षे महाबलमुनींदुना । यथा चक्रे क्षमाचर्या कर्त्तव्याप्यपरैस्तथा ॥ २२ ॥ यथा ताभ्यां व्रतं तीव्रं दंपतीभ्यां विनिर्मितं । अन्यैरपि तथा कार्यं सिद्धिसौ-

रुयाभिलापुकैः ॥ २३ आशातना यथा चाभ्यां विदधे पश्चिमे भवे । दुःखहेतुर्मुनींद्रस्य कर्त्तव्या न तथैव सा ॥ २४ ॥

श्रीमत्पार्श्वजिनेंद्रनिर्वृतिदिनाद्याते समानां शते ।
संजज्ञे नृपपनंदना मलयतः सुंदर्यसौ नामतः ॥
एतस्याश्चरितं यथा गणभृता प्रोक्तं पुरा केशिना ।
श्रीमच्छंखनरेश्वरस्य पुरतोऽप्यूचे मयेदं तथा ॥ २५ ॥

इत्यागमिकश्रीजयतिलकसूरिविरचिते ज्ञानरत्नोपाख्याने मलयसुंदरीचरित्रे शीलावदातपूर्वभववर्णनो नाम चतुर्थः प्रस्तावः समाप्तः ॥ श्रीरस्तु ॥

॥ इति श्रीमलयसुंदरीचरित्रं समाप्तम् ॥

---

आ ग्रंथ श्रीजामनगरनिवासी लालन विठलजी हीरालाले स्वपरना श्रेयमाटे पोताना श्री सूर्योदय छापखानामां छापी प्रसिद्ध कर्यो छे ॥ श्रीरस्तु ॥

